तद्धि पूर्वं नरश्रेष्ठ दत्तं सदसि दैवतैः ।
अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८
नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः ।
कर्तुमारोपणं शक्ता न कथंचन मानुषाः ॥ ९
धनुषस्तस्य वीर्यं हि जिज्ञासन्तो महीक्षितः ।
न शेकुरारोपयितुं राजपुत्रा महाबलाः ॥ १०
तद्धनुर्नरशार्दूल मैथिलस्य महात्मनः ।
तत्र द्रक्ष्यसि काकुत्स्थ यज्ञं चाद्भुतदर्शनम् ॥ ११
तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः ।
याचितं नरशार्दूल सुनाभं सर्वदैवतैः ॥ १२

G 1 34 11
B 1 31 12
L 1 29 11

---

रत्न चानेन सह भ्रात्रा यास्यस्यस्माभिरेव च —After 7^cd B1 ins

745* राजानो बहवस्तत्र गमिष्यन्ति न संशयः ।

—^cd) Ck धनुरत्न D1 (marg also) च वधूरत्नं, D5 T3 G1 2 M2–4 Cg धनुरत्न च (M4 हि) D11 तृतीयं सहितोऽस्माभिस्, T1 2 D10 रत्न महाद्भुत तत्र, G3 कल्यद्भुत धनूरत्नं (for °) D6 11 14 G2 4 M1 Cm g तद् (for रत्न) D13 तद्धनुर्, G1 तत्रैव (for तत्र रत्न) Ś1 Ñ V B D1 (m also) 3 5 7 10 12 रत्न महाद्भुत तत्र धनुस्तद् (Ś1 V3 D5 12 °स्त्व) द्रष्टुमर्हसि

8 M4 om 8 —^a) D9 तच्च, D12 यद्धि, M3 तत्र, Cm g k as in text (for तद्धि) —^b) D1 (m gloss) यज्ञत्रैः (for दैवतैः) —^c) D3 6 12 अप्रमेय D12 च त, T2 -नर (for -बल) —^d) Ś1 D2 3 5 12 मिथे, B2 D11 निसे, D1 मये, D7 मैथिले (hypermetric), Cg as in text (for मखे) —For 8 Ñ V B1 3 4 D10 14 subst while B2 subst l. 1 for 8^ab and ins along with D11 l 2 after 8

746* प्रावृत्त किल तत्तस्य न्यासभूत महद्धनु ।
देवासुरे तदा युद्धे वृत्ते दैवैः सवासवैः ।

[(l 1) V4 तस्य हि किल, D13 नृपतेस्तस्य (for किल तत्तस्य) —(l 2) V1 3 B3 4 D10 13 तथा D11 महा (for तदा) ]

9 ^a) Ś1 D5 12 तत्तु, Ñ V B D1 7 10 13 M4 यत्र, D3 8 तत्र, D6 यस्य, D9 तस्य, D11 न तद्, Cg k t as in text (for नास्य) D1 स (for second न) —^b) Ś1 D1–3 5 7 11 12 पन्नगा (for राक्षसा) Ñ V B1–3 D10 M4 न (B1 स) यक्षोरगराक्षसा (V4 °पन्नगा), B4 न यक्षा न च पन्नगा —^c) D14 G4 भारोपणे (sic) Cg k t भारोपण (as in text) —^d) D9 केचन च (for कथचन) —For 9^cd, Ś1 D1 3 5 7 11 12 subst

747* अधिज्य कर्तुमानम्य शक्ता किंमुत मानवा ।

[D1 3 7 भायम्य (for भानम्य) D2 3 7 मनुषा (for मानवा) D1 किमु तमानता नरा (for the post half) ]

while Ñ V B D10 13 M4 subst

748* समापूर (D13 °रोप) यितुं शक्ता कुत एवेतरे जना ।

10 ^a) Ś1 D3 धनुषा, Cg as in text (for धनुषस्) Ś1 D1–3 5 7 11 12 बल, M3 तत्र (for तस्य) D1 च D14 T1 2 G2 4 M1 तु (for हि) D9 धनुरदस्य वीर्ये हि, D10 13 M4 धनुष सातता तस्य —^b) Ñ V B D10 13 M4 नराधिपा (for महीक्षित ) Ś1 D1 12 जिज्ञासति महीपति —^c) Ñ V B3–4 D10 13 M4 आ (N2 चा) लोलयितुम्, D1 आलोकयितुं (for आरोपयितु) —^d) D1 G1–3 M1 3 राजपुत्र Ñ V B D10 11 अपि (V4 समा) पूर (B1 D11 तोल) यितु कृत, D1 (m also as in text) M4 कुत पूरयितु बलात्, D12 अप्या रोपयितु कुत

11 G2 om (hapl) 11^b–12^a Ś1 D1–3 5 7 12 transp. 11 and 12 —^b) D13 शकरस्य, M3 जनकस्य (for मैथिलस्य) M4 महीपते (for महात्मन ) D9 सुनाभं सर्वदे (दै) वतै (= 12^d) —^c) Ś1 D5 12 मिथेर, Ñ V1–3 B D1 3 7 10 11 13 M4 यज्ञे, V4 यज्ञ, Cm g t as in text (for तत्र) D1 द्रक्ष्यामि (for द्रक्ष्यसि) D7 शार्दूल (m/ km also as in text) (for काकुत्स्थ) —^d) Ñ V B D1–3 7 10 13 M4 सहास्माभिरितो (V2 °रतो, D2 °स्ततो) गत, Dt D4 8 यज्ञ च परमाद्भुत —After 11 Ñ V B D1 3 7 10 11 13 M4 ins

749* तथेत्युक्त्वा ततो राम प्रयातुमुपचक्रमे ।
विश्वामित्रपुरोगैस्तैर्महर्षिभिरदारथी ।

[(l 1) D1 गुरोर्वाक्यात् (for ततो राम ) Ñ1 प्रस्थानम् (for प्रयातुम्) D1 (m also) प्रस्थान समरोचयन् (for the post half) ]

12 G2 om 12^abc (cf v l 11) Ñ V B D10 11 13 M4 om 12 Ś1 D1 3 5 7 12 transp 12 and 11 —^a) Ś1 D1–3 5 7 12 तेषा, D4 चेति (for तेन) —^b) Ś1 D2 3 5 7 12 मैथिला (Ś1 °ना, D2 12 मिथिला, D3 मिथिना) धनुरुत्तम, D1 मिथिलानर धनुरुत्तम (hypermetric) (नरोत्तम also in marg, and gloss तैः मैथिलैः यज्ञाना फल तद्धनूरत्नमेव प्राप्त) —^d) Ś1 D1 2 3 7 9 12 दुर्लभं, D3 * * भं (for सुनाभं] Dt G3 M3 3 (after corr sec m as in text) Cv दे (दै) वतैः, D1–3 7 9 पार्थिवैः, Cm g t as in text (for दैवतैः) ❀ Cr सर्वदैवतेभ्य ।, Ck सर्वदैवैस्तदा दत्तस्थितिकम् । ❀ —After 12 Dt D4 6 8 9 14 T G2 M1 3 all Cs ins

750* आयागभूत नृपतेस्तस्य वेश्मनि राघव ।
अर्चित विविधैर्गन्धैर्धूपैश्चागरुगन्धिभि ।

[(l 1) D9 °भूते T3 आयगे° Cv as above (for आयागभूत) Ctp न्यासभूत नरपते (for the prior half) ❀ Cv आयागभूत धनुर्मखेषु प्राधान्येनालक्ष्य धनुरायाग तद्रूपम् । ❀ —(l 2) T3 माल्यैर्, G1 पुष्पैर् (for गन्धैर्) D6 माल्यैश्चागरु-, D8 T1 °श्चागुरु-, T3 भूरिगरु- (for धूपैश्चागरु ) ]

G 1 34 13
B 1 31 14
L 1 29 13

एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा ।
सर्षिसंघः सकाकुत्स्थ आमन्त्र्य वनदेवताः ॥ १३
स्वस्ति वोऽस्तु गमिष्यामि सिद्धः सिद्धाश्रमादहम् ।
उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम् ॥ १४
प्रदक्षिणं ततः कृत्वा सिद्धाश्रममनुत्तमम् ।
उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १५
तं व्रजन्तं मुनिवरमन्वगादनुसारिणाम् ।
शकटीशतमात्रं तु प्रयाणे ब्रह्मवादिनाम् ॥ १६
मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः ।
अनुजग्मुर्महात्मानं विश्वामित्रं महामुनिम् ॥ १७
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
वासं चक्रुर्मुनिगणाः शोणाकूले समाहिताः ॥ १८
तेऽस्तंगते दिनकरे स्नात्वा हुतहुताशनाः ।
विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ॥ १९
रामोऽपि सहसौमित्रिर्मुनींस्तानभिपूज्य च ।
अग्रतो निषसादाथ विश्वामित्रस्य धीमतः ॥ २०

13 a) M3 उक्तो, Ck.t as in text (for उक्त्वा) —b) Ś1 D5 12 सम(Ś1 चम[sic])रोचयत् (for मकरोत्तदा) —cd) G1 नृपस्कध (for सर्षिसंघ) Ś1 D5 12 महर्षिसंघ काकुत्स्थमामन्त्र्य नरदेवता —For 13, Ñ V B D1-3 7 10 11 13 M4 subst

751* विश्वामित्रोऽथ भगवानामन्त्र्य वनदेवता ।
उवाचेद ततो वाक्य पिपासुर्मिथिला प्रति ।

[(l 1) V3 [s]पि (for sथ) D3 भगवन् —(l 2) D13 विवाच (sic) (for उवाच) D1-3 7 M4 तदा (D3 तथा also) (for प्रति) D11 तदाश्रमस्य प्रति (for the post half) ]

14 a) Ś1 V3 B1 D5.12 गमिष्यामः —b) Ś1 Ñ V1-3 B D1 7 10-13 सिद्धा, Ck.t as in text (for सिद्ध) Ś1 D5 12 चय, Ñ V1-3 B D10 11 13 M4 इत (for अहम्) V4 सिद्धाश्रममुपादिता (sic) —Ś1 om 14cd D3 8 7 transp 14cd and 15cd —c) Ñ V B D1-3 7 10 11.13 M4 -तीर, D5 12 -कूल, Cg as in text Ck -कूले (for -तीरे) —After 14 Dt D6 8 G3 M3 (sec m) ins

752* इत्युक्त्वा मुनिशार्दूल कौशिक स तपोधन ।

15 Dt D6 8 om 15ab D3 8 7 transp 15cd and 14cd —a) T3 तत प्रदक्षिणं (by transp) Ñ V B D1 10 13 M4 उपाकृत्य, D11 उपासंग्य, D11 कृत कृत्वा (for ततः कृत्वा) —b) Ñ V B D1 10 11 13 M4 तत सिद्धाश्रमे मुनि, D3 सिद्ध सिद्धाश्रमादह —c) B4 D6 दिशिम् (sic) Ś1 Ñ V B D5 10-13 समास्थाय, D1-3 7 M4 माश्रित्य (for उद्दिश्य) —d) Ś1 V3-4 B1 D3 5 7 11 13 T1 3 G1 प्रयातम्, B3 4 D13 प्रस्थातम्, G3 **तुम् (for प्रस्थातुम्) Ś1 D5 12 °चक्रमु, Cm उपचक्रमे (as in text)

16 a) D13 T1 3 G2.3 M1 प्रयात (for व्रजन्तं) —b) D4.9 13 T2 3 G1.2.3 M1 3 Cg मन्वयाद्, Cm as in text (for मन्वगाद्) T3 भाव***वादिनां —c) M3 शाक* (for शकटी) D4.9 T3 G1 3 M1-3 च (for तु) —For 16 Ś1 D5 12 subst, B1 (m) ins after 754*

753* ते प्रयाता मुनिवरा बहवो रेणुपाण्डुरा ।
शकटीशतमात्रेण विश्वामित्रपुरोगमा ।

[(l. 1) D5.12 गच्छन्तो (for बहवो) B3 रेणुपाण्डव ]

—For 16 Ñ V B D1-3,7 10 11 13 M4 subst

754* युक्त महारथाना तु शतमात्र तत क्षणात् ।
ययौ मुनीना भाण्डानि समारोप्यानुयायिनाम् ।

[(l 1) D1 11 च (for तु) V4 D13 हि शत°, B1 तु शत°, D1 तनोपिक, D2.3 7 समनत, M4 ततोन्वयात् (for तत क्षणात्) D1 (m gloss) माल्लधाना रथा महारथा तेषां शतमात्र कियताप्यधिक. —(l 2) Ñ V B D10 13 ययुर्, M4 तेषा (for ययौ) D10 [अ]नयायिना D3 समारोपितुयाजिना (sic) (for the post half) —After this B3 (m) cont 753* ]

17 a) D3 *चाश्र (for -गणाश्) V3 तत्र (for चैव) —c) Ś1 D11 13 °भागो, Dt D9 °त्मानो, D5 °त्मानं (for महात्मानं) Ñ V B D1-3 7 10 13 M4 प्रयात(D2 °यान्त)मनु (M4 °मुप)जग्मुस्त(D13 °स्ते) —d) Dt D6 8 तपोधनं (for महामुनिम्) —After 17 Dt D6 8 T1 3 G1-3 M1-3 Cg k.t ins

755* निवर्तयामास तत पक्षिसंघान्मृगानपि ।

[G3 missing up to या D4 M3 3 बहून् (for मृगान्) Dt D6 8 G3 सर्वेषां सपक्षिण (for the post half) ]

18 c) M3 (after corr sec m as in text) चक्रे (for चक्रुर्) D9 उषुस्ता रजनीं तत्र —d) Ñ V B D10 13 M4 शोणतीरम्, D1 2.3-7 9 11 12.13 G1 शोणकूले (D2 °मूले), D5 शोनत* (sic) (for शोणाकूले) ❀ Cg शोण पुनद् स एव शोणेत्यपि व्यपदिश्यते t, Ck.t also gloss similarly ❀ Ñ1 V2 D5 13 T3 °गता, Ñ2 B1 3.4 D10 M4 उपाश्रिता, V1 3 B2.3 (m also) उपागता, V4 समव्रता (for समाहिता)

19 a) Ñ V B D1-3 7 10 11.13 M4 गते तु(D1-3.7 11 च) स्त (for तेऽस्तंगते) —b) Ś1 D5 11.12 ततो, Ñ V1 3 B1.3 4 D1 7 10 स्नाता, D2 सर्वे, D3 illeg D13 प्रातर् (for स्नात्वा) Ś1 D5.12 13 [s]पि हुतहुताशना, V2 हुतहुताशना, V4 चैव हुताशना, D3 स्नाता हुताशना, D10 **हुताशना Cg as in text (for b) —c) D10 न्यषेदुर् (for निषेदुर्) Ś1 D5 11.12 धर्मात्मले, V1 B2.4 M3 °सं, G1 मतितेजस (for ऽमितौजस)

20 B1 om 20-22b D13 om 20ab —a) D1 हि (for ऽपि) V4 रामः सौमित्रिणा सार्धम् —d) D16 मान्यपूज्य

अथ रामो महातेजा विश्वामित्रं महामुनिम् ।
पप्रच्छ मुनिशार्दूलं कौतूहलसमान्वितः ॥ २१
भगवन्को न्वयं देशः समृद्धवनशोभितः ।
श्रोतुमिच्छामि भद्रं ते वक्तुमर्हसि तत्त्वतः ॥ २२
चोदितो रामवाक्येन कथयामास सुव्रतः ।
तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥ २३

G. 1. 34. 23
B 1. 31. 24
L. 1. 29. 22

इति श्रीरामायणे बालकाण्डे त्रिंशः सर्गः ॥ ३० ॥

(sic), M3 अभिवाद्य; Cg as in text (for अभिपूज्य). Ś1 D6 13 ऋषींस्तान्समपूजयत्; Ñ V B2-4 D1-3 7 10 11 M4 अभिवाद्य तपोधनान् (B4 °नं).—c) Ñ V B2-4 D10 13 निषसाद (Ñ1 °ष) भितस्तस्य; D3 असतो निषया** (sic).

21 B1 om 21 (cf v l 20).—a) G3 राजा (for रामो) Ñ V B2-4 D1 3 7.10 M4 [अं]जलिं कृत्वा; D2 बलिं कृत्वा; D12 [अं]जलिं बद्धा (for महातेजा) —b) Ś1 Ñ V B2-4 D1-3 6 7 10-13 M4 ऋषिं तदा (D1-3 7 11 °तः); Dt D6 8 तपोधनं, D13 मुनिं तदा (for महामुनिम्) —c) Ñ V1 2 4 B2-4 D4 10 13 T3 M3 नरशार्दूलः (for मुनिशार्दूलं). —d) V3 Dt D8 M3 -समन्वितं.

22 V3 (hapl ) B1 om 22ab (for B1 cf. v l 20). —a) B4 M3 भगवान्, Ck किं नु (for को नु) Cg.k t अयं देशः (as in text) Ñ V1 2 4 B2-4 D1-4 7 10 11 M4 कस्य देशोऽयं; D6 को ह्ययं° (for को न्वयं देशः) —b) M2 महद्- (for समृद्ध-) G2 M1 -शोभन. (for -शोभितः) Ñ V1 2 4 B2-4 D1 2 6 7 10-13 M4 समृद्धवनसेवित..—c) Ñ V B2-4 D1-3 7 10 M4 सत्येन; B1 यत्नेन (for भद्र ते).—d) Ś1 D6 11 12 [अ]शेषतः; D13 शेषतः (for तत्त्वतः) Ñ V B D1-3 7 10 M4 त्वत्त एव (V B1 M4 °त्तं) म(Ñ1 *)हामुने (D1-3.7 °मुने).

23 G2 om. (hapl.) 23cd.—a) Dt D6 8 12 मोदितो; Cm g as in text (for चोदितो) —b) Ś1 विस्तरात्; D5 12 विस्तरं, T3 सुव्रतं; G1 तत्त्वतः (for सुव्रतः).—c) Ś1 D6 9 12 तं देशमखिलं सर्वम्.—d) Ś1 D6 12 तपोधनः; G2 M1 समाहितः (for महातपाः) —For 23, Ñ V B D1-3 7 10 11 13 M4 subst..

756* चोदितो रामवाक्येन तस्य देशस्य विस्तरम् ।
विश्वामित्रो महातेजा व्याहर्तुमुपचक्रमे ।

[(l 1) V2 देशितो, B1 चोशितो (sic), D1-3 7.13 नोदितो (for चोदितो). V4 विस्तर (for विस्तरम्).—(l. 2) V2 व्याख्यातुम् (for व्याहर्तुम्).]

—After 23, D3 ins 757*.

Colophon Ś1 D5 11 13 om (cont. the sarga). —*Kānda name* Ñ2 D10 om V B आदि°, D13 अयोध्या° —After Kānda name, V1 3 B1 ins बालचरिते. —*Sarga name* Ñ1 V B शोणतीरनिवास; D1-3 7 सिद्धाश्रमोपावर्तनं, D8 सिद्धाश्रमनिवासो.—*Sarga no.* (figures, words or both) Ñ1 V1 4 B1 4 D2 om. Ñ2 B2 3 D8 10 34, V2 36, V3 33, Dt D4 6 8 14 S 31; D1 7 24; D2 25. D13 * * काण्डे * * तीर* * * नाम सर्गः.—After colophon, T3 G1 2 4 M3 conclude with श्रीरामाय नमः; G3 with श्रीमते रामानुजाय नमः.

G 1 35 1
B 1 31 1
L 1 30 1

३१

ब्रह्मयोनिर्महानासीत्कुशो नाम महातपाः ।
वैदर्भ्यां जनयामास चतुरः सदृशान्सुतान् ।
कुशाम्बं कुशनाभं च आधूर्तरजसं वसुम् ॥ १
दीप्तियुक्तान्महोत्साहान्क्षत्रधर्मचिकीर्षया ।
तानुवाच कुशः पुत्रान्धर्मिष्ठान्सत्यवादिनः ।
क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम् ॥ २
कुशस्य वचनं श्रुत्वा चत्वारो लोकसंमताः ।
निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ३
कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत्पुरीम् ।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ४
आधूर्तरजसो राम धर्मारण्यं महीपतिः ।
चक्रे पुरवरं राजा वसुश्चक्रे गिरिव्रजम् ॥ ५

## 31

Ś1 D5.11.12 continue the previous Sarga —Before 1, Ś1 D1-3.5.7.9 (after 1 30 23) 11-13 ins.

757* शृणु राम कथा दिव्या देशस्य च समुद्भवम् ।

[D5 om च (submetric) D1.3.6.7.8 समुद्भवां ]

1 b) Ś1 D4.5.12 T2 °पसा, Ñ V B D1-3.7.10.11 जना (V2.3 B1 D10 नरा)धिप (for महातपा ) M4 कुश इत्यभि विश्रुत —After 1ab, D1 D4.5.8.14 S ins

758* अक्लिष्टव्रतधर्मज्ञ सज्जनप्रतिपूजक ।
स महात्मा कुलीनायां युक्तायां सुगुणोल्बणात् ।

[(L 1) M3 (after corr sec m as above) -पून (for व्रत ) M4 (inf lin pr m ) -मन (for प्रति ) —(L 2) D1 D4.8 सुमहाबलान्, T2 स गुणोल्बणा, G1 रघुनन्दन, G2 स गुणोल्बणान्, M4 च गुणोल्बण D6 सुयुक्तायां गुणोत्करान् (for the post half) ]

—c) Ś1 D5.11 स किल, Ñ V B D1-3.7.10.11.12 स सुतान् (D1-3.7 पुत्रान्), D6 G3 M3 वैदेह्या (for वैदर्भ्यां) Ś1 D5.11 [स]जनयत्सुश्रोणि, D4 °साम (by metathesis) (for जनयामास) —d) G3 M3 (after corr inf lin sec m as in text) सदृश (for सदृशान्) D4 T2 सदृशांश्चतुर (by transp ) D14 सुतान् (for सुतान्) Ś1 D5.12 पुरुषर्षभ ; Ñ V B D1-3.7.10.11.13 स्वयात(V2.3 °ति, D1 [स]त्यति) विक्रमान् (D1-3.7 °पौरुषान्) (for सदृशान्सुतान्) —Note hiatus between e and f (in all MSS except in V1) —e) V2 कुशाम्बं, V4 अंशाम्बं, B1 कुशाम्बं (for कुशाम्बं) Ś1 D1.12 T3 कुशनाभं कुशाम्बं(Ś1 °भं) (by transp ) —f) Ś1 Ñ2 V2.3 B1.3.4 D1-3.5.7.9.10.12.13 आधूर्त(Ś1 D5 °सुत्त)र(Ñ2 V4 B1.2.4 D13 व)यसं, Ñ1 V1.2 B2 D6.11 अ (V3 to avoid hiatus[अ]submetric) मूर्त(Ñ1 [elsewhere as in V1] °रस [sic])जसं, D1 D4(after corr as in text) 8.14 T1 M1.2.4 Cm 1 अ (M1.3 मा)मू(D14 °धू, T3 M3 °पू)र्तरय(M4 °य)स V4 (m also as in text)वसु D5 वसुं, D10 गयं (for वसुम्)

2 a) Ś1 D1-3.5.7.12.13 महोत्साहान्(D1 °हं, D13 °कान् [sic]) Ñ V1.2.4 B1-3 D10.13 महात्मा(Ñ2 V3 B3 °त्म)नो V3 महात्मनो B3 (m. also) 4 महामुनीन् (for दीप्तियुक्तान्) Ś1 Ñ V B D1-3.5.7.10-13 दीप्तिमत (Ñ1 V2 B3 D3.5.7.10 °मत, D1 °मंत), M3 महाभागान् (for महोत्साहान्) —d) Ñ V1-4 B D10 M4 -परायणान् (Ñ1 V2.3 B1 D10 °णा ), V2 विशारदान् (for चिकीर्षया) Ś1 D1-3.5.7.9.11-13 °र्ममनुव्रतान् —c) D13 कुशान् (sic) (for कुश ) —d) Ś1 D12 धर्मिष्ठ , Ñ V B D10.13 M4 विनीतान् ; D11 T3 धार्मिकान्, M3 धर्मज्ञान् (for धर्मिष्ठान्) Ś1 D5.9.12 क्षत्रधारग (D9 °गान्), Ñ V B D1-3.7.10.11.13 M1 श्रुव(Ñ2 B2 D13 °ति, D1 शास्त्र, D2.3.7 वेद )पारगान्, G1 मह° (for सत्यवादिन ) —e) Ñ V B D1-3.7.10.13 M4 प्रजानां (for क्रियतां) —f) D14 T1.2 G2 M3 धर्म्यं (for धर्मं ) Ñ V B D1-3.7.10.11.13 M4 क्रिय(V2.3 B1 M4 °प )ता(D11 प्रजाना) मिति राघव(D1 नोदिता )

3 D7.13 om (hapl?) 3 V1 reads 3 in marg —a) Ñ V B D1-4.10.12 T1 G3 M3.4 पितुस्ते(V2 D13 °स्तद्), D5 Cg श्रुत्वेषु (for कुशस्य) Ś1 D5.12 श्रुत्वैतस्य वच श्रुत्वा —b) D13 चत्वास् (by metathesis) (for चत्वारो) Ś1 D5.12 तेमितौजस , D1 D4.6 °सत्तमा (for लोकसंमता ) Ñ V B D1-3.10.11 M4 लोकपालोपमा सुता (B3 m also शुभा ) —c) G1.2 निवेशाद्, Cm g t निवेशं (as in text) —d) D13 पुराणि (sic) (for पुराणां) T2 G2.3 M1-3 तथा (for तदा) Ś1 D5.11.12 °कुशासुता , G1 चतुरश्च पृथक् पृथक्

4 a) Ś1 कुशाभस्, Cg कुशावस् (as in text) —b) Ś1 कौशाम्बीम्, D11 कौशाम्बीम् —For 3c-4b, Ñ V B D1-3.10 M4 subst while D7.13 subst 1.2 only for 4ab

759* पुराण्यावासयत्तासु पृथक् चत्वारि राघव ।
तेषां कुशाम्ब कौशाम्बीं पुरीमावसदच्युताम् ।

[(L 1) V1 पुरा (with hiatus) (for पुराणि) D2.3.6 V1.3 B1.3 (m as above) D1-3 M4 कृता तु (V1 B3 कि, B1 °थ) (for चत्वारि) —(L 2) V2 कुशाम्ब, V4 कुशाङ्ग (for कुशाम्ब ) Ñ1 V4 D3 कौशांबीं, V3 कौसांबी D1-3.7 M4 आवासयद्धा D13 °ह तां (for °च्युताम्) ]

—c) D13 कुशनाभस्, D1.3 सु°, M4 तदा राम (for तु धर्मात्मा) —d) D4 कुर्वे (for पुरं)

5 a) T2 मधूर्तरजसो D1 D4.8 T1 G1.4 M1.3 नाम (for राम) —b) D1 D4.8 महामति (for महीपतिः) —c)

मा भूत्स कालो दुर्मेधः पितरं सत्यवादिनम् ।
नावमन्यस्व धर्मेण स्वयंवरमुपास्महे ॥ १८
पिता हि प्रभुरस्माकं दैवतं परमं हि सः ।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥ १९
तासां तद्वचनं श्रुत्वा वायुः परमकोपनः ।
प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभुः ॥ २०
ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् ।
दृष्ट्वा भग्नास्तदा राजा संभ्रान्त इदमब्रवीत् ॥ २१
किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते ।
कुब्जाः केन कृताः सर्वा वेष्टन्त्यो नाभिभाषथ ॥ २२

G I 35 23
B I 32 26
L I 30 23

इति श्रीरामायणे बालकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

*या, M2 °खल)पितु (D2 °यवा), V4 शीला(lacuna for र्द्र)वयितु, Ck t as in text (for स्थानाक्ष्यावयितु) Ś1 Ñ V B D1 3 5-7 12 13 G2 3 M4 र्वव, D2 द्वा, D9 नैव, D11 वीर*, Cv m g k t as in text (for देव) —d) Ñ2 V2 4 B3 व (V4 B3 र)क्ष्याम, D3 *क्षाम (for रक्षामस्) Ś1 Ñ V1 3 4 B1 3 4 D5 7 10-13 स्वकुल, V2 कुशल, B2 सुकुल, D2 स्व*ल, D9 तु कुल, G2 सु° (for तु तपो) D1 2 M4 रक्ष त्व (D1 रक्षिता, D2 रक्षसा [both sic]) स्थानमूर्जित

18 a) D2 स illeg Ñ V B D1 3 10 13 Ctp यद्वा (D3 **) यो, D7 यो वायो, D9 यशोस्मिन्, M1 4 °था, Cg k as in text (for दुर्मेध) Ś1 D6 11 12 °स्कल्को यशोस्मिन् —cd) Dt D6 8 M1 भवमन्यस्व, Cv r m भावमन्यस्व (as in text) Ś1 D5 13 क्ष(Ś2 क्षा)यद्वाय द्य(D5 स्व)धर्मेण स्वय कन्या वर मजत् Ck as in text (for d) ‡ Cg पितर नावम यस्य धर्मेण पितृप्रदानरूपेण वर स्वयमुपास्महे प्रतीक्षामहे पिता स्वय यस्मै दास्यति त प्रतीक्षामह इत्यथ, Ct यत्र काले पितरमवमन्यापमानविषय कृत्वा स्वधर्मेण कामेन स्वयवरमुपास्महे था मना स्वातन्त्र्येण वथ वरमङ्गीकुर्म स काल कदाचिदपि माभू दित्यन्वय । नावमन्य इति पाठस्तु काचित्कोऽपपाठ । तथा पाठे न इति छेद् । छान्दस दीर्घत्व। नोऽस्माक स कालो माभू दित्यन्वय । क्वचित्तु नोऽवमन्यस्व इति पाठ । अत एव 'मा भूत्स कालो यद्वा नो पितर सत्यवादिनम्। कामत समतिक्रम्य वायेम स्वयवरम्।' इत्येतदर्थविवरणश्लोको दृश्यते क्वचित् । ‡ —For 18cd Ñ V B D1 3 7 10 11 13 M4 subst

763* कामत समतिक्रम्य वरयेम स्वयवरम् ।

[M4 न कामाद् (for कामत) V4 तमतिक्रम्य V1 वरयाम D3 स्वर वय (by metathesis) (for स्वयवरम्) ]

19 D4 om 19 —a) Ś1 D6 11 12 जनिता (for पिता हि) Ñ V B D1-3 7 10 13 M4 पितास्माक प्रभवति —b) Ñ V B1 3 4 D13 स पर, D10 न पिता (for परम) Ś1 N V B D1 3 5 11-13 M4 पिता, Dt D8 14 T1 2 G2 4 M1 च°, D4 T3 °न, D7 महत्, D10 पर (for हि स ) —c) Ś1 D4 7 11 13 यस्मै (for यस्य) Ñ V B D1-3, 7 10 13 M4 यस्मान्दास्यत्यसौ यस्मै (M4 °स्य) —d) V4 मे (for नो) —After 19 B3 ins

764* न पितुर्वचनाद्वन्यं न भजिष्यामहे वयम् ।

20 a) Ś1 Dt D5 6 8 12 तु (for तद्) —b) Dt D6 8 Ct हरि, Ctp as in text (for वायु) N V B D1-3 7 10 11 13 M3 4 कोपसमन्वित —c) D2 3 7 गात्रेषु (for गात्राणि) —d) D2 भयज (sic) (for बभञ्ज) D4 (after corr inf lin) मरुत् (before corr हरि), Cm as in text (for प्रभु) —For 20cd Ñ V B D1 10 11 13 subst

765* बभञ्ज कन्या मध्ये ता सप्रविश्यामतेजसा ।

[V2 मध्ये कयाास्ता (by transp) D1 कन्यामध्य ता (marg gloss तासा कन्याना मध्य प्रविश्य) D11 मध्ये ता कन्या (by transp) V1 3 B1 स (for स) V4 -तेजसा (sic) ]

—After 20 B (ed) ins

765a* अतिमात्राकृतयो भग्नगात्रा भयार्दिता ।

21 b) D9 विवशा (for विविशुर्) Ś1 D5 13 नगर(Ś1 °री) पितु, N V B D1 3 7 10 11 13 M4 भवन पितु (V1 B3 [also] D12 प्रति), D2 वद्दन पितु, D9 न्यविशन्गृह —After 21ab Dt D4 6,8 9 12 (after 21) 14 S (except M4) (Cg k t comm on l 1) ins

766* प्रापतन्भुवि सभ्रान्ता सलज्जा साश्रलोचना ।
स च ता दयिता दीना कन्या परमशोभना ।

[(l 1) Dt D6 8 प्रविश्य च तु (D8 तु) D9 °त्तु (for प्रापतन्भुवि) D13 प्रोत्थिस्य सुमन्ना (for the prior half) D13 सुलज्जा Dt D4 6 8 13 T2 3 साश्रु (for साश्र) —(l 2) D13 अवदद् (for स च ता) D13 M2 तु(D13 स) पिता M3 (after corr as above) यदि ता (for दयिता) Dt D6 8 तत्र, D13 कन्या (for दीना) D12 तद (for कन्या) D13 T1 2 G2 4 M1 कन्या दीना (by transp) D13 -लोचना, T3 भास्वर (for शोभना) ]

—c) Dt D6 8 दीनास्त, G1 2 भुग्नाश (for भग्नास्) Ñ V B D10 11 13 M4 च ता (N2 तावद् [sic], V4 सुता) राम; T2 M3 तथा° (for तदा राजा) Ś1 D1-4 6 7 12 ता स्त (D2 °श्च [sic] D3 ताश्च [hypermetric])त्र (D5 6 12 °था) तु पिता दृष्ट्वा —d) Ś1 Ñ V B D2 10 12 13 सापर्दिङ्, Cg k as in text (for सभ्रान्त) D1-4 7 11 M4 पिता(D2 °* D4 हृद, D11 राजा)वचनमब्रवीत्

22 a) D12 कथिता (sic) (for कथ्यता) D3 पुत्र, T3 पुत्रो (both sic) M4 सर्वा (for पुत्र्य) —D4, 7 om.

G 1 35 13
B. 1 32 14
L. 1 30 13

अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि ।
उद्यानभूमिमागम्य तारा इव घनान्तरे ॥ १२
ताः सर्वगुणसंपन्ना रूपयौवनसंयुताः ।
दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १३
अहं वः कामये सर्वा भार्या मम भविष्यथ ।
मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १४
तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः ।
अपहास्य ततो वाक्यं कन्याशतमथाब्रवीत् ॥ १५
अन्तश्चरसि भूतानां सर्वेषां त्वं सुरोत्तम ।
प्रभावज्ञाश्च ते सर्वाः किमस्मानवमन्यसे ॥ १६
कुशनाभसुताः सर्वाः समर्थास्त्वां सुरोत्तम ।
स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम् ॥ १७

च) M6 गायत्यश्चाथ नृत्यतो —d) Dt D6 8 तु (for च) D10 राघ*; D14 T1 3 G3 4 (M1 3 सर्वेश (for राघव) Ś1 D5 13 नृत्यत्यश्च यथासुखं —e) Ś1 D5 11 12 आह्लादं, all Cs as in text (for आमोद) D1-3 7 M4 मोदन्त्यो जल (D3 वल also) मानाश्च —d) G3 सर्वा (for वरा) Ś1 Ñ V B D5 10-13 वन (Ñ1 V3 4 B1 3 वर, B4 गध, D13 यनैर्) माल्यै (V3 मन्यै [sic]) वस्त्र (D13 °त्र) कृता

12 Ś1 D5 13 om 12 D5 repeats 12ab consecutively —a) B4 °वाश्च (sic), D11 अक्ष क्षं, Cv as in text (for अथ ताश्च) Ñ V B D10 11 13 -सर्वाङ्गी (for -सर्वाङ्ग्यो) —b) B3 (sup lin also) भुव, M4 तदा (for भुवि) D5 (second time) 3 7 वनमाल्यैरलङ्कृता (=11d in Ś1) —Ñ V B D1-3.7 (D3 hapl) 10.11 13 M4 om 12c-13b, D3 om 12cd —c) =10c T3 -वन°, G3 M1 -मध्ये शोभंते, Cm k as in text (for भूमिमागम्य) —d) T2 transp इव and घन

13 Ñ V B D1 3 7 10 11 13 M3 om 13ab (cf v l 12) —ab) Dt D5 11 T1 M3 सर्वा, Cg as in text (for सर्व ) M2 -संपदा (for संयुता ) Ś1 D5 13 तास्तत्र रूपसंपन्ना यौवनेनाप्यलङ्कृता —c) Ś1 Ñ1 V3 4 D1 3 5 7 9 12 13 सर्वभूतो, Ñ2 V1 B3 4 D10 सर्वगतो, V2 B1 2 D11 तु सर्वगो (V2 °श्चो), Cg सर्वात्मको (as in text) V4 lacuna (for वायु)

14 a) Ś1 D1-3 5 7 12 भवती (D1 °ती [sic]) D14 (after corr m as in text) °य, Cg as in text (for अहं व ) —b) Ś1 Ñ V B D1-3 5 7 10-13 M4 °मे भवता (Ś1 D5 12 °ते, Ñ V1 3 4 B D10 11 13 भवत मे [by transp] D3 मे * द * 1) बला (Ś1 D5 12 °त्रि वै) —c) Ś1 मानुषे, D3 Ck मानुष्यस, D11 मत्येष, Cg t as in text (for मानुषस्) D1 4 M4 त्यज्यतो (sic) D11 त्रियतां, Ch as in text (for त्यज्यतां) Ś1 D5 12 स्नेहो (for भावो) Ñ V B D5 10 13 M4 त्यक्त्वा मानुष्यकं भावम्, Cg t as in text (for c) —d) Ñ V B D5 10 13 M4 अमरत्वम् (for दीर्घमायुर) Ś1 D1 3 5 7 12 13 मवाप्स्यथा, D10 मवाप्स्यथ * (for मवाप्स्यथ) Cg as in text (for d) —After 14 Dt D1.4.5.9.11 (marg sec m) S (D9 G1 2 only) Cg t ins.

702* चलं हि यौवनं नित्यं मानुषेषु विशेषतः ।
अक्षयं यौवनं प्राप्ता अमर्यश्च भविष्यथ ।

[No comm in Cr m k —(l 2) D14 T2 3 G3 M1 यक्ष्य D14 om यौवन G1 प्राप्य (for प्राप्ता) D4 9 T3 G1 3 M2-4 (M3 after corr sup lin sec m as above) अमराश् (for अमर्यश्) ]

15 a) Dt वनच (by metathesis) (for वचनं) —b) Ś1 D1-3 5 7 12 अक्लिष्ट°, Ñ V B D10 13 परममगना (Ñ1 V2 3 °हा ) D5 (after corr pr m as in text) अश्लिष्ट°, M4 ता परमात्मना, Cg as in text (for अक्लिष्टकर्मण ) —c) Ś1 D1 3 5 7 12 अव (D5 °प) हस्य, Ñ V B D10 13 M4 मुक्त्वा (Ñ1 B4 त्यक्त्वा, B3 मुक्ता ) हास, D5 सो°, D11 विहस्य (submetric), Cg k t as in text (for अपहास्य) M4 काले, Cg as in text (for ततो) Ñ V B D10 13 M4 सर्वा, D11 वायु (also as in text) Ch as in text (for वाक्यं) —d) Ś1 D1-3 5 7 9 12 उवाच तं (for अथाब्रवीत्) Ñ V1-3 B D10 13 M4 वायु (V3 वाद्यो [sic] M4 तत्रो) वचनमब्रुवन्, V4 इद वचनमब्रवीत्, D11 कन्यास्ताश्चाब्रुवन्नथ

16 ab) T3 M4 चरति, Cg t as in text (for चरसि) B3 (m also) भूता मा (for भूताना) V1 D1-3 7 सर्वेषा (V1 marg ) भूताना (by transp) Ñ V B D1-3 7 10 11 13 M4 किल (M4 इद ) मारुत Dt D4 5 सुरसत्तम, G1 3 च सु° (for त्वं सुरोत्तम) —G3 om (hapl) 16c-17b —c) V4 भावज्ञास्ता (for प्रभावज्ञाश्च) Ñ V1 3 4 B2 3 D4.5.9 11 T3 M1-3 स्म, V3 B4 स (sic) (for च) D11 सर्वा (for सर्वाः ) Ś1 D5 12 प्रभाव ते विजानीम, B1 D1 प्रभावं ज्ञास्यते (D1 °से ) सर्वा, G1 प्रभावज्ञश्च सर्वासा —d) Cg अस्मान् (as in text) B1 D3 किल (B1 °ल्म [sic]) स्मान्, Dt D4 5 Ct किमर्थम् (for किमस्मान्) D9 °ते, D13 °+से (for अवमन्यसे) Ck as in text (for d)

17 G3 om 17ab (cf v l 16) —a) V3 D11 12 साध्वी, V4 साध्य, Dt D4 5 देव, M4 साध्वा (for सर्वा°) —b) D3 समर्था (sic) D4 सधर्मा, D13 क्षमस्त्वं, M3 (after corr sup lin sec m as in text) °र्थास् (for समर्थास्) D4 5 T3 G1 M1-3 स्म, D14 स्वं, G3 तु, M4 च (for त्वां) D1 M4 न (M4 तु) र्षभ (D3 °भ ) (for सुरोत्तम) Ś1 D1 3.5 7 12 समर्थास्त्वं न मारुत (D1 °त ), Ñ V B D10.11 क्षमते (V3 D11 °मते [sic]) न हि मारुत (B4 °त (sic), D11 °ता ), Dt D4 5 समस्ता सुरस (D5 स सुरे) त्तम —c) Ñ V1-3 B D1-3.7.10 11.13 M3.4 °च्यत (D13

मा भूत्स कालो दुर्मेधः पितरं सत्यवादिनम् ।
नावमन्यस्व धर्मेण स्वयंवरमुपास्महे ॥ १८
पिता हि प्रभुरस्माकं दैवतं परमं हि सः ।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥ १९
तासां तद्वचनं श्रुत्वा वायुः परमकोपनः ।
प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभुः ॥ २०
ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् ।
दृष्ट्वा भग्नास्तदा राजा संभ्रान्त इदमब्रवीत् ॥ २१
किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते ।
कुब्जाः केन कृताः सर्वा वेष्टन्त्यो नाभिभाषथ ॥ २२

G 1 35 23
B. 1 32 26
L. 1 30 23

इति श्रीरामायणे बालकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

*था, M2 °चल)यितु (D2 °यता), V4 शीला(lacuna for श्रे)धयितु, Ck t as in text (for स्थानाच्चयावयितु) Ś1 Ñ V B D1 3 5 7 12 13 G2 3 M4 देव, D2 देवा, D8 नैव, D11 वी*, Cv m g k t as in text (for देव) —[d]) Ñ2 V3 4 B3 व (V4 B3 र)श्याम, D5 *श्याम (for रक्षामस) Ś1 Ñ V1 2 4 B1 2 4 D6 7 10–13 स्वकुल, V3 कुशल, B3 सुकुल, D3 स्व*ल, D9 तु कुल, G3 सु° (for तु तपो) D1 2 M4 रक्ष त्व (D1 रक्षिता, D2 रक्षत [both sic]) स्थानमूर्जित

18 [a]) D3 स illeg Ñ V B D1 3 10 13 Ctp यद्वा (D3 **) यो, D7 यो वायो, D9 वद्योस्मिन्, M3 4 °धा, Cg k as in text (for दुर्मेध) Ś1 D6 11 12 °कलको वद्योस्मिन् —[cd]) Dt D6 8 M1 अवमन्यस्व, Cv r m नावमन्यस्व (as in text) Ś1 D5 12 स्व(Ś1 त्वा)वहाय ह्य(D5 स्व)धर्मेण स्वय कन्या वर व्रजत् Ck as in text (for [d]) ❀ Cg पितर नावमन्यस्व धर्मेण पितृप्रदानरूपेण वर स्वयमुपास्महे प्रतीक्षामहे पिता स्वय यस्मै दास्यति त प्रतीक्षामह इत्यर्थ, Ct यत्र काले पितरमवमन्यापमानविषय कृत्वा स्वधर्मेण कामेन स्वयवरमुपास्महे मा मना स्वातन्त्र्यस्य यथ परमसीकुर्मे स काल कदाचिदपि माभू दित्यन्वय । नावमन्य इति पाठस्तु काचित्कोऽपपाठ । तथा पाठे न इति छेद । छान्दस दीर्घत्व । नोऽस्माक स काले माभू दित्यन्वय । क्वचित्तु नोऽवमन्यस्व इति पाठ । अत एव 'मा भूत्स काले यद्वा नो पितर सत्यवादिनम् । कामत समतिक्रम्य वरयेम स्वयवरम् ।' इत्येतदर्थविवरणश्लोको दृश्यते क्वचित् । ❀ —For 18[cd] Ñ V B D1 3 7 10 11 13 M4 subst

763* कामत समतिक्रम्य वरयेम स्वयवरम् ।

[M4 न कामात् (for कामत) V4 समतिक्रम्य V1 वरयाम D3 स्वर वय (by metathesis) (for स्वयवरम्) ]

19 D8 om 19 —[a]) Ś1 D5 11 12 जनिता (for पिता हि) Ñ V B D1–3 7 10 13 M1 पितास्माक प्रभवति —[b]) Ñ V B1 3 4 D13 स पर, D10 न पिता (for परम) Ś1 Ñ V B D1 3 5 11–13 M4 पिता, Dt D1 16 T1 2 G2 4 M1 च°, D1 T3 °न, D7 महत्, D10 पर (for हि स) —[c]) Ś1 D5 9 11 12 यस्मै (for यस्य) Ñ V B D1–3 7 10 13 M4 अस्मान्दास्यत्यसौ यस्मै (M4 °स) —[d]) V4 से (for नो) —After 19 B3 ins

764* न पितुर्वचनाद्न्य न भविष्यामहे वयम् ।

20 [a]) Ś1 Dt D3 4 5 12 तु (for तद्) —[b]) Dt D6 8 Ct हारि, Ctp as in text (for वायु) Ñ V B D1–3 7 10 11 13 M2 4 कोपसमन्वित —[c]) D2 3 7 -गात्रेषु (for -गात्राणि) —[d]) D2 भयज (sic) (for बभञ्ज) D4 (after corr inf lin) सहसा (before corr हरि), Cm as in text (for प्रभु) —For 20[cd] Ñ V B D1 10 11 13 subst

765* बभञ्ज कन्या मध्ये ता सप्रविश्यात्मतेजसा ।

[V2 मध्ये कन्यस्ता (by transp) D1 कन्यामध्य ता (marg gloss ताना कन्याना मध्य प्रविश्य) D11 मध्ये ता कन्या (by transp) V1 3 B1 स (for स) V4 तेजस्ता (sic) ]

—After 20 B (ed) ins

765a* अरत्निमात्राकृतयो भग्नगात्रा भयार्दिता ।

21 [b]) D9 विवशा (for विविशुर्) Ś1 D5 12 नगर(Ś1 °री) पितु, Ñ V B D1 3 7 10 11 13 M4 भवन पितु (V1 B2 [also] D13 प्रति), D2 तद्गृह पितु, D8 -र्यविशन्गृह —After 21[ab] Dt D4 6 8 9 12 (after 21) 14 S (except M4) (Cg k t comm on l 1) ins

766* प्रापतन्भुवि संभ्रान्ता सलज्जा साश्रुलोचना ।
स च ता दयिता दीना कन्या परमशोभना ।

[(l 1) Dt D6 8 प्रविश्य च तु (D8 तु) D9 °वतु (for प्रापतन्भुवि) D13 प्रोक्तिस्स सुमनस्त्र (for the prior half) D13 सुल** Dt D4 6 8 12 T2 3 साश्रु (for साश्रु) —(l 2) D13 भवस्य (for स च ता) D13 M2 तु (D13 स) पिता, M2 (after corr as above) यदि ता (for दयिता) Dt D6 8 भग्ना, D13 कन्या (for दीना) D13 ता (for कन्या) D14 T1 2 G2 4 M1 कन्या दीना (by transp) D13 -शोभना, T3 भास्वर (for शोभना) ]

—[c]) Dt D6 8 दीनास, C1 2 भुग्नास (for भग्नास) Ñ V B D10 11 13 M4 च ता (N1 तादन् [sic], V4 सुता) राजा T2 M3 तथा° (for तदा राजा) Ś1 D1 3 5 7 12 ता स्त (D2 °ष्ट [sic] D3 गतास्त [hypermetric])दा (D7 8 12 5 °था) तु पिता दृष्ट्वा —[d]) Ś1 Ñ V B D6 10 11 13 राजर्षिर्, Cg k as in text (for संभ्रान्त) D1–4 7 11 M1 पिता(D3 °* D4 दृष्ट्वा, D11 राजा)वचनमब्रवीत्

22 [a]) D13 कथिता (sic) (for कथ्यता) D2 पुत्र, T3 पुत्रो (both sic) M4 सदा (for पुत्र्य) —D3 7 om.

# ३२

G 1 35 24
B 1 33 1
L 1 30 23

तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः ।
शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत ॥ १

वायुः सर्वात्मको राजन्प्रधर्षयितुमिच्छति ।
अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ २

पितृमत्यः स्म भद्रं ते स्वच्छन्दे न वयं स्थिताः ।
पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥ ३

तेन पापानुबन्धेन वचनं न प्रतीच्छता ।
एवं ब्रुवन्त्यः सर्वाः स्म वायुना निहता भृशम् ॥ ४

(hapl.) from 22^b up to the prior half of 767* —^d) B4 D4 T3 भति(B4 भनु)वतते, Ct as in text (for कथ मन्यते) M4 सुकुमारानना शुभा, Cg k as in text (for ^d) —^e) Ś1 Ñ V B D1.2.5.8-13 M4 सूर्य (for सर्वा) —^f) Dt D6.8 पे° (for वेष्टन्यो) Dt D6.8 T3 G1.4 °ता; D4 नाभ्य°, Ct as in text (for नाभिभाषय) Ś1 D5.8.12 विचेष्टो(Ś1 °ता, D5 °ते [both sic]) न भाषय(Ś1 °त), Ñ V B D1.2.10.11.13 M4 सभा(Ñ1 V2 D13 संत्र)वि(N2 °द्वि)इय दुरात्मना —After 22 Ś1 D1.2.5.7.9.13 ins.

767* शसय्य किमिदं पुत्र्य कुल्यार्व कथमागतम् ।

[D2.3 om. the prior half (cf v.l. 22) D1 कुल्यार्ता D2 फेन चागत ]

while T3 G2.3 M1 ins

768* श्रोतुमिच्छाम्यह पुत्र्यो यस्येदं कर्म गर्हितम् ।

[T1 उ पुत्रो (sic) G3 तद° (for [म]ह पुत्र्यो) T2 धर्मेण पत्र (for कर्म गर्हितम्) ]

—D9 T2 G2.3 M1 cont while Dt D6.8.14 T1.3 G1 M2.3 all Cs ins after 22

769* एवं राजा विनि श्वस्य समाधिं संदधे तत ।

[D4 विनिश्चित्य T3 संदधे G3 M3 विदधे (for संदधे) G1 damaged (for तत) ]

Colophon. Ś1 Ñ V B D1.10-13 om (continue the Sarga) —*Kāṇḍa name* D1.3 अयोध्या° —*Sarga name* Dt D4.8.13.14 S om. D1.2.7.9 कन्याकुब्जकरणे (D9 °ख्याने) —*Sarga no.* (figures, words or both) D4 om both. Dt D4.8.13.14 S 32 D1.7 25 D2 26, D9 35 —After colophon, T3 concludes with श्रीरामचन्द्राय नमः, G1.2.3 M1 श्रीरामाय नमः; G3 श्रीमते रामानुजाय नमः

## 32

Ś1 Ñ V B D1.10-13 cont. the previous sarga.

1 ^b) T3 कुशनाभश्च Ś1 D5.13 वा सुता (for धीमतः) D7 om. (hapl) from 1^c up to l. 1 of 770* —^cd) D13 शरणे T3 पार्श्वे, Cm g t as in text (for चरणौ) Ñ V B D1-3.10.11 गत्वा; D13 नत्वा (for स्पृष्ट्वा) Ñ1 द्रुयम् (for न्यातम्) G3 M3 अपाभवीत् Ś1 D5.13 अभिवाद्य पितु पादौ सर्वा वचनमब्रुवन् (Ś1 D13 °ब्रवीत्).

2 ^a) Ś1 D5.13 सर्वत्रग (D13 °गत) सोऽस्मान् (for सर्वात्मको राजन्) —^b) Cb प्रधर्षयितुम् (as in text) Cm इच्छति (as in text) Ś1 D5.13 नैच्छद्धर्षयितु प्रभु (D13 विभु), Cg t as in text (for ^b) —^d) Ś1 °वेक्षत, D5.13 पर्यवेक्षत (D5 °क्ष्य तं) (both sic), T3 °वेक्ष्यते, Cm as in text (for प्रत्यवेक्षत) ⁂ Ct अशुभ - अपेक्षते स्म ⁂ —For 2 Ñ V B D1.2.7.10.11.13 M4 subst

770* वायुरस्मानुपागम्य बलवान्काममोहित ।
उत्क्रम्य धर्ममर्यादां प्रधर्षयितुमुद्यत ।
सोऽस्माभिरुक्त सर्वाभिर्वायु कामवशं गत ।

[D7 om l. 1 (cf v.l. 1) —(l. 1) D2 °गत्य (for उपागम्य) V3 बलवद् (for बलवान्) —(l. 2) V3 चक्रे हि D2.3.7 न्युत्क्रम्य (for उत्क्रम्य) V1 [अ]धर्मं (for धर्म) —(l. 3) B3 reads from first वा up to 3 in marg V3 रक्षे (for वाग) D11 om from गत up to भवति in l. 1 of 771* ]

3 D11 om. 3 (cf v.l. 2 [770*]) D2 om. (hapl) 3^ab B3 reads 3 in marg (cf v.l. 2) —^a) Ś1 D5.13 °वत्यो, D1 °गुप्ता, D9 °मत्यो (sic) (for पितृमत्यः) Ś1 D5.13 वय सर्वा, Ñ V B D1.2.7.10.13 स्म भगव(Ñ1 °*)न्, M4 च भगवन् (for स्म भद्रं ते) —^b) Cg k t स्वच्छन्द न (as in text) Ś1 D5.13 न स्वातन्त्र्यमुप(Ś1 °पा)स्थिता; Ñ V B D1.2.7.10.13 M4 न स्वच्छंदचरा वय, D9 न स्वच्छंद मुपस्थिता —Ś1 D5.13 om (hapl) 3^c–4^b —^c) Ñ V B D1.2.7.10.13 M4 नोऽस्मिन्यावस्त्व; D9 नो मदी° [sic] Cg k t as in text (for नो वृणीष्व त्वं) —D1 om from 3^d up to the prior half of l. 2 of 771* —^d) Cm k दास्यते (as in text) Cg t दास्यति Ñ V B D1.2.7.10.13 M4 न्यासतो यदि मन्यसे

4 Ś1 D5.13 om 4^ab (cf v.l. 3) —^a) D9 पापानु बिद्धेन —^b) D1 प्रतीक्षता; Cm g k t as in text (for प्रतीच्छता) —^c) Dt D4.14 G1.4 M2.3 Ck ब्रुवत्य, Cg t as in text (for ब्रुवन्त्य) Ś1 D5.13 इति तत्र ब्रुवाणा स्म (D5 स्मो) —^d) Ś1 D5.13 वायुनोपहता Dt D4.8 °भिहता; T1 °भिमता, Cm g k t as in text (for वायुना निहता) —For 4 Ñ V B D1-3.7.10.11.13 M4 subst.

771* न वयं स्वैरचारिण्य प्रसीद भगवन्निति ।
इत्युक्त कुपितो वायु प्रविश्याङ्गानि न प्रभो ।
बभञ्ज बलवांस्तेन सर्वा कुब्जीकृता वयम् ।

तासां तद्वचनं श्रुत्वा राजा परमधार्मिकः ।
प्रत्युवाच महातेजाः कन्याशतमनुत्तमम् ॥ ५
क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत्कृतम् ।
ऐकमत्यमुपागम्य कुलं चावेक्षितं मम ॥ ६
अलंकारो हि नारीणां क्षमा तु पुरुषस्य वा ।
दुष्करं तच्च वः क्षान्तं त्रिदशेषु विशेषतः ॥ ७
यादृशी वः क्षमा पुत्र्यः सर्वासामविशेषतः ।
क्षमा दानं क्षमा यज्ञः क्षमा सत्यं च पुत्रिकाः ॥ ८
क्षमा यशः क्षमा धर्मः क्षमायां विष्ठितं जगत् ।
विसृज्य कन्याः काकुत्स्थ राजा त्रिदशविक्रमः ॥ ९
मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः ।
देशे काले प्रदानस्य सदृशे प्रतिपादनम् ॥ १०

G I 35 34
B I 33 10
L I 30 34

[D3 om up to the prior half of l 2 (cf v l 3) D11 om l 1 except हि (cf v l 2 [770*]) —(l 2) D10 reads from the post half up to 5ᵇ in marg D2 °च D12 [ध]स्मातन (for [ज]ज्ञाति न) V1 मनु, D7 प्रभो (for प्रभो) —(l 3) V1 बलसेन (submetric) D2 3 7 बलवान्वायु, D11 बलवास्तात (for बलवास्तेन) B4 कुब्ज° (sic) M4 कुब्जा° (for कुब्जीकृता) D11 बहुशोपहता वय (for the post half) ]

5 D10 reads 5ᵃᵇ in marg (cf v l 4) —ᵃ) Ś1 Dt D4-6 8 9 12 T3 G3 M3 तु (for तद्) Ñ V B D1-3 7 10 11 13 M4 इति तासा वच श्रुत्वा —ᵇ) Ñ V B1-3 D1 3 7 10 11 13 M4 कु(Ñ2 द)शनाभो नराधिप, B4 ✱✱नाभो जनाधिप —ᶜ) V2 इयुवाच Ñ V B1-3 D10 11 13 M4 ततो राम, B4 स ततो राम (hypermetric) D1-3 7 तदा राम (D7 °म) (for महातेजा) —ᵈ) Ś1 Ñ V B D1-3,5 7 10-13 इदं वच, Cg as in text (for अनुत्तमम्)

6 ᵃ) Ś1 D5 12 भद्रे कृतमिदं, Dt D8 T2 3 M2 3 °क्षमवता, M1 °वता, all Cs as in text (for क्षान्त क्षमावता) —D9 om 6ᵇ-7ᵃ —ᵇ) Ś1 D5 12 च°, Dt सुसमाहित, Cr g h t as in text (for सुमहत्कृतम्) —ᶜ) D3 एकमत्यम्, G2 ऐकपत्यम् (for ऐकमत्यम्) Ś1 उपागत्य —ᵈ) Ś1 D5 12 वै रक्षितं, G4 चावेष्टित, Cg t as in text (for चावेक्षित) —For 6 Ñ V B D1 3 7 10 11 13 M4 subst

772* यत्क्षान्त्योऽतिक्रमो वायो कृते यन्मे महत्प्रियम् ।
पुत्र्यो मे यच्च युष्माभि कुलचर्याभिरक्षिता ।

[(l 1) V3 स क्षान्तो, D3 यत्पतो (sic), M4 यत्क्षाम्यो (for यत्क्षान्त्यो) Ñ1 °क्रमे, V1 °क्रम, D2 विक्रतो (sic) D7 विक्रमो (for अतिक्रमो) D3 वायु (for वायो) D2 3,7 तु (for मे) V2 महाप्रिय, D10 ✱हत्प्रिय, M4 भवत्प्रिय (for महत्प्रियम्) —(l 2) D1 या च मे, D2 यच्च मे, D3 7 युष्माभिर् M4 यच्चापि (for पुत्र्यो मे) V2 यत्र, D1 पुत्रि, D2 पुत्र M4 पुत्रो (for यच्च) D2 3 मे पुत्र (for युष्माभि) Ñ1 V2 4 B1 2 (marg as above) D1-3,7 M4 कुलच्छाया, V2 कुलच्छाया (for कुलचर्या) D1 [अ]वि (for [अ]भि-) D13 कुलमाभिश्च रक्षित (for the post. half) D11 मद् कृत च युष्माभि कुल वै रक्षित मम ]

7 D9 om 7ᵃ (cf v l 6) —ᵃ) G3 अहंकारो (sic) D13 om. हि (submetric) Ś1 D5 12 क्षमा पुत्र्य (D12 also क्षमापुरुष) (for हि नारीणा) —ᵇ) Ś1 D5 8 12 स्त्रियो वा, T3 G1 °हि, M2 क्षम तु, M4 क्षान्तिता (for क्षमा तु) D9 G1 च, Ck t as in text (for वा) Ñ V B D1-3 7 10 11 13 क्षमा पुत्र्यो (D1 °त्रि, D2 13 °त्रो [sic]) विशेषत —For 7ᶜ-10ᵇ, Ñ V B D1 3 7 10 11 13 M4 subst a passage given at the end of 10ᶜᵈ —ᶜ) Ś1 तद्वच, Dt D6 8 तच्च वै, D12 T1 2 G2 M1 तच्च यत्, G1 तत्र च, G4 तस्य यत्, Cv as in text (for तच्च व) D5 ख्यात (for क्षान्त) ❀ Cm क्षान्त तद्दुष्करम्। Cg च तत्क्षान्त क्षमा दुष्कर त्रिदशेषु रूपैश्वर्यसपन्नेषु विशेषतो दुष्करम्। Ct यत्तु दुष्कर यत्त्रिदश विषये क्षान्त कामवेगसहनं कृत तदतिदुष्कर। ❀ —After 7, Ś1 D5 12 ins, while D9 ins after 9ᶜᵈ

773* प्रालोऽय देशकालश्च सुपात्रप्रतिपादने । (cf 10ᶜᵈ)

Then all the above MSS (var) cont 775*

8 Cf v l 7 and 10 Ś1 D5 12 om from 8-9ᵇ T2 om. (hapl) 8ᵃᵇ —ᵃ) D9 सर्वा, G1 पुत्र (sic) (for पुत्र्य) —ᵇ) D9 समता च (for सर्वासाम्) —ᶜ) Dt D4 6 T3 सत्य, G4 यज्ञ (for यज्ञ) —ᵈ) Dt D4 6 T3 यज्ञश्, D8 यज्ञाद् (for सत्यं) D9 G1 3 M2 3 तु, D14 T1 2 G2 4 M1 हि (for च) G4 पुत्रका

9 Cf v l 7 and 10 Ś1 D5 12 om 9ᵃᵇ (cf v l 8) —ᵇ) D9 M1 Cg क्षमया (for क्षमाया) D4 नि°, D8 M2 [अ]धिष्ठित, D14 T1 2 G2 4 हि स्थित, T3 विष्ठितो, Cg as in text (for विष्ठित) —After 9ᶜᵈ, D9 ins 773* —ᶜ) D8 विसर्ज्य (for विसृज्य)

10 ᵃ) T3 मन्त्रज्ञान् (for मन्त्रज्ञो) —ᵇ) Ś1 प्रदाने, Cm g t as in text (for प्रदान) —For 7ᶜ-10ᵇ Ñ V B D1 3 7 10 11 13 M4 subst

774* देवाना च विशेषेण क्षन्तव्यमिति मे मति ।
दुष्कर च कृत मन्ये यद्वायो क्षान्तमीदृशम् ।
व्यभिचारकृत यस्मात्क्षीणोऽहं तेन सुव्रता ।
प्रदानसमय चैव मन्येऽहं योऽस्य सर्वश ।
गम्यतामिष्टत पुत्र्यश्चिन्तयिष्यामि वो हितम् ।     [5]
विसृज्य चैव ता कन्यास्तत स नृपसत्तम ।
तासा प्रदान धर्मज्ञो मन्त्रयामास मन्त्रिभि ।

[(l. 1) D1 3 7 देवेषु°, D13 पुत्रों चैव (for देवाना च) B2 (marg as above) विशेषेन (for विशेषेण) V1 सततं (for मे मति) —D1-3,7 om. l 2. —(l 2) V1 °तु, B1 D13

G 1 35 36
B. 1 33 11
L. 1 30 35

एतस्मिन्नेव काले तु चूली नाम महामुनिः ।
ऊर्ध्वरेताः शुभाचारो ब्राह्मं तप उपागमत् ॥ ११

तप्यन्तं तमृषिं तत्र गन्धर्वी पर्युपासते ।
सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥ १२

सा च तं प्रणता भूत्वा शुश्रूषणपरायणा ।
उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरुः ॥ १३

स च तां कालयोगेन प्रोवाच रघुनन्दन ।
परितुष्टोऽस्मि भद्रं ते किं करोमि तव प्रियम् ॥ १४

दुष्कृत°, B3 D10 सुकृत°, B4 सुदुष्कर (for दुष्कर च) D12 वदा यन्तेतद् (for मन्ये यदायो) V3 कामम्, M4 क्षान्तिम् (for क्षान्ताम्). —(l 3) V1 क्षान्ति°, D1 शाम्यातिचाला, D2 शुम्यातिचरिता, D3 7 शाम्या(D7 °स्य)तिचरित (all sic) (for व्यतिचारका) V4 B1 2 D12 यस्मात् (for तस्मात्) D3 प्रीतोह मम, D13 प्रातोश° (for प्रीतोऽ° तेन) D3 सुतुना (sic) (for सुवता) M4 व्यभिचार कुकासीन तेन प्रीतोस्मि सुव्रता —(l 4) B1 °सत्त्व, D12 प्रज्ञान° (for प्रज्ञासमय) M4 [अ]ि (for [ए]व) D3 मयतः सर्वथैव (sic) (for the prior half) B4 चाथ, D13 नाथ (for सोऽथ) M4 सुव्रता —(l 5) V1 2 इच्छत° (for इच्छ) Ñ3 B2 1 D10 गमिष्यामि तत° पुन्यह्, D12 प्रगम्यातस्मित पुन्यश्च, D13 गम्यतामिच्छया पुष्यत् (for the prior half) V2 व्यपरिष्यामि (for चिन्तयिष्यामि) D2 मोहित —D1-3 7 Mercad l. 6 7 after 775* —(l 6) B1 विसृष्य, D3 विसृज्य (for विसृज्य) V2 चैव°, V4 [ए]व हि ता (for चैव ता) D12 एव निरुज्य° (for the prior half) V3 तत स न नृपोत्तम, D2 3 7 राजा त्रिदशाधिका (= 9ᵈ) (for the post. half) —(l 7) D13 राज्ञ (for तासा) V1 प्रयात, B4 D12 प्रतान (for प्रतान) M4 मन्त्रज्ञो (for धर्मनो) D13 चिंतयामास (for मन्त्रयामास) D1-3 7 मंत्याता च(D2 सम)यामास प्रदान(D3 °न) सह(D1 गृह)मंत्रिभि ) ]

Ñ V B D1 3.7 10 11 13 M4 cont, Ś1 D5 8 13 ins after 773*

775* यदा पुत्री च ता कन्यास्तत्र कुब्जीकृता पुरा ।
कन्याकुब्जमिति ख्यात तत प्रभृति तत्पुरम् ।

[(l 1) D5 यद् (for यद्) D1 3 7 सर्वास् (for कन्यास्) Ś1 D5 8 13 कन्यास्तास् (by transp) B1 तत्र, D13 त च (for तत्र) V2 D8 13 कुब्जा(D13 °ब्जा)कृता Ñ3 marg M4 पुरे (for पुरा) —(l 2) Ñ V B2-4 D10 कान्य° B1 D7 11 कन्य° (for कन्याकुब्ज) D1 तदा (for तत°) B3 (marg also) गाधर B4 °पर (for तत्पुरम्) ]

—After 775* D2 3.7 M4 ins l. 6 and 7 of 774* —Ś1 Ñ V B D1-3 5.7 10-13 M4 om 10ᶜᵈ —ᶜ) D4 देशकालौ, T1 G1 4 Cm देशकारे; Cg k as in text (for देशे काले) Dt D4 8 च कर्तव्य, Cr m g as in text (for प्रदानस्य) ※ Ct उचिते देशे काले सदृशे स्वकुलादिसदृशे पात्रे प्रदान कार्यमिति मन्त्रणक्रम । ※

11 ᵃ) V1 तस्मिन् (submetric) (for एतस्मिन्) Ñ2 एक (for एव) D1 after एव, तु wrongly written —ᵇ) Ś1 D5.13 चूलिर्, V1 3 D12 चूली, V2 D4 चुली, B1 चूदी, B4 (marg also) गूली, B3 हली, D1-3.7 चूलिर्, D8 चुट्टी, D13 चूडिन्, T2 3 G2.3 M चूडी (M4 °डिन्), G2 चूर्णी (for चूली) Ś1 Ñ V B D1-3 6 7 10-13 °नृपि, Dt D6 8 °मुनि, T3 °यशा (for महामुनि) —ᶜ) Ñ V B D1-3.7 10.11.13 ब्रह्मचर्य (for शुभाचारो) —ᵈ) D2 T3 ब्राह्मय (for ब्राह्म) Ś1 D5 13 ब्रह्मतेजा ह्य(Ś1 °जोभ्य)स्कृत, Ñ V1 B D1-3 7 10 चचार(D3 °ह) किल दुश्च(B1 °ष्क)र, V3-4 D11 12 चकार किल दुष्क(V3 D12 °श्च)र

12 ᵃ) Ś1 D5 13 तप्यमान, D4.6 8 T3 तपस्यतम्, Cg as in text (for तप्यन्त तम्) D8 12 तु तमृषिं (for मृषिं तत्र) —ᵇ) Ś1 D5 13 तमुवाच ह, Cr t as in text (for पर्युपासते) —For 12ᵃᵇ, Ñ V B D1-3.7 10 11.13 M4 subst

776* त ब्रह्मचारिण राम तप्यमान महत्तप ।

[D1-3 7 महाते परमचु ते, M4 ब्रह्मनिमितयति (for the post half) ]

—ᶜ) Ś1 D3.5 7 12 13 सोमपा, D2 सोपमा, D8 सोमेदा, T3 सौमदा, M4 सोमगा, Cl t as in text (for सोमदा) Ñ V1 2 4 B D1-3 7 13 M4 गधर्वी, V3 गंधर्वा, D6 भद्रे ते, D13 गाधर्वी, Ch as in text (for भद ते) ※ Cg पर्युपासते अशुश्रूषत । भद्रे भद्रं भद्रमस्त्विति प्रयोग शुभोक्तित्वाद । ※ —ᵈ) S (except M1.4) ऊर्मिला Ś1 Ñ V B D1-3 5 7 9-13 M4 ऊ(D2 य, D10 -द्)णायु(V2 °वा, D1 °य, D8 13 °युर, D6 11 °योर्)दुहिता (B4 °तनया as in text), Cl t as in text (for ऊर्मिलातनया) D4-6 11 तथा, D13 पुरा, Cg t as in text (for तदा) —After 12 Ñ V B D10.11 13 ins, D1-3 7 subst for 13ᵃᵇ

777* नियम परमास्थाय सम्यक्परिचचार ह ।
पुरार्थिनी वचो राम महर्षभाविगामन ।

[(l. 1) V2 नियम वरम्, D2 निय * * *, D13 पर नियमम् (by transp) D7 आराध्य (for आस्थाय) D1-3.7 वै (for ह) ]

13 ᵃ) Ś1 V2 B1 D5 तदा, Ñ V1.4 B2-4 D10 11.13 [अ]भवत्, V3 [अ]वसत्, D5 13 तथा, G3 तु त (for च त) ※ Ct वामिति प्रतियोगे द्वितीया । ※ Ś1 Ñ V B D5 10-13 प्रयता (for प्रणता) —For 13ᵃᵇ, D1-3 7 subst. 777* —Ñ V B D1-3 7 10.11 13 om 13ᶜᵈ —ᶜ) Ś1 D5.13 M4 काले, Cm g k as in text (for काले) Ś1 D5 13 धर्मज्ञस्, D4 T1 2 धर्मिष्ठस्, D8 14 धर्मिज्ञास् (sic) M4 धर्मज्ञास्य (sic) (for धर्मिष्ठा) —ᵈ) T2 G1 M4 मुनि, Cg k as in text (for गुरु)

14 ᵃ) Ś1 D5.13 तथा (for च ता) Cm g k t कालयोगेन (as in text) Ñ V B D10 13 M4 स तु काउस्य महत,

परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरम् ।
उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥ १५
लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः ।
ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिकम् ॥ १६
अपतिश्चास्मि भद्रं ते भार्या चास्मि न कस्यचित् ।
ब्राह्मेणोपगतायाश्च दातुमर्हसि मे सुतम् ॥ १७
तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रमनुत्तमम् ।
ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतम् ॥ १८
स राजा ब्रह्मदत्तस्तु पुरीमध्यवसत्तदा ।
काम्पिल्यां परया लक्ष्म्या देवराजो यथा दिवम् ॥ १९

G 1 35 15
B 1 33 19
L 1 30 44

D1-7 13 स ता (D5 तो) हर्षेण महता, D11 तद कालेन महता —[b]) Ś1 D4 12 प्रावदीद् (for प्रोवाच) Ñ V B D1-3 7 10 11 13 M4 परितोषित (for समुन्नद) —[c]) T3 [अ]स्ति (for ऽस्मि) Ñ V2-4 B D10 13 [अ]ह भद्रे, V1 [अ]ह भद्र ते (hypermetric) D1 ते भद्रे (for भद्र ते) —[d]) Cm g करोमि (as in text) Ñ V B D1 10 13 M4 ब्रूहि किं करवाणि ते (B1 °भद्रे, D10 °मि ते [sic])

15 D8 om (hapl) 15[ab] —[a]) B4 परितुष्टि Ñ V1 2 4 B2-4 D1 10 13 M4 दृष्ट्वा (for ज्ञात्वा) —[b]) V1 3 D3 गन्धर्वी (for गन्धर्वा) Ś1 D2 3 5 7 12 °स्वरा, Ñ V B D1 10 11 M4 °राक्षर, Dt D6 °र स्वर, D13 °राक्षरा, T1 2 °स्वन (for मधुरस्वरम्) —[c]) Ś2 D3 12 परमोदारं, Ñ V B D1-3 7 10 11 13 M4 प्राञ्जलिर्भूत्वा (D1 M4 °र्वाक्यम्), T3 मधुर° (for परमप्रीता) —[d]) D2 14 T1 (*sn/ lns* as in text) 2 °कोविदा (D2 °दा), D11 तस्यापि तदा, Cg as in text (for वाक्यकोविदम्) Ñ V B D1 10 13 M4 वाक्य(D1 M4 इद)मात्महित(B1 °तम्)तदा

16 [a]) T2 समुदितो, M3 समुदित D4 *sup lin* T3 लोक, T3 ब्राह्म, all Cs as in text (for ब्राह्म्या) —[b]) M3 भूतमकल्मष, all Cs as in text (for भूतो महातपाः) —For 16 Ś1 D5 6(l 1 only for 16[ab]) 12 subst

778* ब्राह्म्या लक्ष्म्यानया ब्रह्मन्दीप्यसे ब्रह्मवित्तम ।
त्वत्तो लक्ष्म्यानया ब्रह्मन्पुत्रमिच्छामि धार्मिकम् ।

[(l 1) D5 दीयसे (for दीप्यसे) D12 om (hapl) from दीप्यसे up to the prior half of l 2 —(l 2) Ś1 तथा (for [अ]नया) The post half = 16[d] ]
On the other hand Ñ V B D1 3 7 10 11 13 M4 subst

779* दीप्यसे परया लक्ष्म्या ब्राह्म्या त्वमनया यथा ।
तथाह पुत्रमिच्छामि त्वत्तो ब्राह्म्या श्रियान्वितम् ।

[(l 1) Ñ1 दीप्यसे B1 M4 ब्रह्म, D3 ब्राह्मया, D10 ब्राह्म (sic) (for ब्राह्म्या) D3 —था (for यथा) V2 चद्रश्चामलत्या यथा D1 ब्राह्मोत्तमतया यथा D11 यथा त्व महावित्तम (for the post half) —(l 2) V4 om B1 स्व, D3 illeg D7 हि (for [अ]ह) D2 वृत्ता, D3 ततो (for त्वत्तो) V3 त्रस्यो (sic) D11 13 ब्रह्म (for ब्राह्म्या) V3 श्रिता°, V1 B1 D1-3 7 °युत, B3(marg as in V3 also) 4 °श्रित (for श्रियान्वितम्) ]
D1-3 7 cont

780* त्वयं प्रसादं कुरु मे त्वा (D1 त्वा)श्रिताह तपोधन ।

17 [a]) All Cs अपतिश्च (as in text) T3 [अ]स्म (sic) (for [अ]स्मि) Ś1 D1-3 5 7 12 13 न पतिश्चास्ति मे ब्रह्मन् —[b]) Ś1 D1-3 5 7 G2 न भार्या चास्मि (by transp) D12 न भार्या चास्मि (for भार्या चास्मि न) —[c]) All Cs उपगतायाश्च (as in text) Ś1 D1 2 5 7 12 ब्रा(D5 ब्र)ह्मण्येन तु(D1 च) संयुक्त, Dt D6 ब्राह्मेणो°, D3 ब्राह्मणेन तु संयुक्त, D4 T3 G2 M3 ब्राह्मणो°, D8 ब्राह्मेण तपसा युक्त —[d]) D2 सुता (for सुतम्) D8 पुत्रमिच्छामि धार्मिक (= 16[d]) Cm t as in text (for [d]) —For 17 Ñ V B D10 11 13 M4 subst, while Ś1 D1-3 5 7 13 ins after 17[ab]

781* स्वयं च वरये त्वाद भर्तारमपरिग्रहम् ।
अनन्यपूर्वां भज मा याचमाना यतव्रताम् ।

[(l 1) Ś1 D2 3 7 12 M4 [अ]ह त्वा, D1 हि त्वा D3 M4 [अ]ह त्वा (by transp) (for त्वाह) B2 4 वरयित्वाह Ś1 Ñ1 V2 3 B1 2 4 D2 12 13 °ग्रहा, V1 °ग्रहः, B3 सपरिग्रहं, D1 2 6 7 °ग्रहात्, M4 °ग्रह (sic) (for अपरिग्रहम्) —(l 2) D11 अनल्प (for अनन्य) D3 10-12 पूर्वं (for पूर्वां) Ś1 D3 भजमान(D2 °ना) V3 राज°, D1 2 6 7 12 M4 भज° (for याचमानां) Ś1 V1 2 °व्रत (V3 °त) Ñ1 V2 4 धृत°, B1 दृढ°, D1 जित°, D3 °धृता, D10 पति°, D13 अनु° (for यतव्रताम्) ]

18 [a]) Ñ V B D10 11 13 M4 तस्यै, D1 तत, Cg k t as in text (for तस्या) Ñ V B1-3 D3 7 10 13 विप्र°, Ct as in text (for ब्रह्मर्षिर्) —[b]) Dt D6 8 G1 Ct ब्राह्म, M3 सुतम् (for पुत्रम्) B4 repeats ददौ पुत्र Ś1 D5 12 14 T1 2 G2 4 M1 तथाविध, Ñ V B D1-3 7 10 11 13 M4 य-(D10 *)थेप्सित (for अनुत्तमम्) —[c]) T3 G1 2 M1 ब्रह्मदत्तम् Ś1 Ñ V B D1-3 5 7 10-13 M4 ख्यात (for ख्यातं) —[d]) Ñ V B D1-3 7 10 11 13 M4 सोमवच (B1 2 D3 °त्) (for मानसं) V1 B2(marg also)शूलिन, V2 D11 चूलिन, B1 वृषिण, B3(marg also)कूलिन, B4 इलिन, D5 कलिन, D6 चुलिन, D8 चूह्लिन, D14 चूलिक, T G2 4 M Ck चूलिन, G1 Ckp चूलिक, Cv चूलिक Cg t as in text (for चूलिन) Ñ V B D1-3 7 10 11 13 M4 सुत (D1 °त) Cg k t सुत (as in text) Ś1 D5 12 सोमचूलिसुतो नृप

19 Ś1 D6 12 om (D6 12 hapl) 19 D2 3 7 transp 19 and 20 (D2 3 om 20[cd]) —[a]) G3 राज्ञ (for राजा) D1 14 T G2 4 M1 Cg सौमदेयस, G3 सोमदेयस (for ब्रह्मदत्तस्) Ñ V B D1-3 7 10 11 13 ब्रह्मदत्त तु (D3 °ताय, D3 °तोय, D7 °तोय) राज(D11 °*)षि —[b]) Ñ

G 1 35 45
B 1 33 20
L 1 30 45

स बुद्धिं कृतवान्राजा कुशनाभः सुधार्मिकः ।
ब्रह्मदत्ताय काकुत्स्थ दातुं कन्याशतं तदा ॥ २०
तमाहूय महातेजा ब्रह्मदत्तं महीपतिः ।
ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥ २१
यथाक्रमं ततः पाणिं जग्राह रघुनन्दन ।
ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ २२
स्पृष्टमात्रे ततः पाणौ विकुब्जा विगतज्वराः ।
युक्ताः परमया लक्ष्म्या बभुः कन्या शतं तदा ॥ २३
स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ।
बभूव परमप्रीतो हर्षं लेभे पुनः पुनः ॥ २४
कृतोद्वाहं तु राजानं ब्रह्मदत्तं महीपतिः ।
सदारं प्रेषयामास सोपाध्यायगणं तदा ॥ २५

---

V B D2 3 7 10 11 13 M4 पुरमध्या(V6 °ध्ये, D13 °ध्य)वसत्तदा (D7 °त), D1 पुत्र(र)मध्यावसत्तदा, D9 G1 M1 Cg पुरीमध्या° —c) N2 D11 कापिल, V1-3 B1 2 D1 7 13 कापिल्य, V4 B3 D10 कापिल्ल, B4 कापिल्ल, D2 कापिल्य, D3 कपिल, D4 9 का(D8 क)पिल्ली, D14 कपील्या, G2 3 M Ck काम्पिल्या(G1 °ल्या, M2 °ल्लीं, M4 °ल्य), Cm t as in text (for काम्पिल्या) Ñ V B D1-3 7 10 11 13 नाम (B4 भूमौ) काकुत्स्थ (D2 3 7 नगर), M3 °भतया (for परया लक्ष्म्या) —d) Dt G1 दिवि (for दिवम्) Ñ V1 2 4 B D1-3 7 10, 11 13 देव(D13 वेद metathesis)राजसमद्युति, V3 देवराजसम क्षितौ —After 19 D2 3 7 ins. 782*

20 D2 3 (both om 20$^{cd}$) 7 transp 20 and 19 —a) Ś1 Dt D5 8 T2 सु, D4 स्व, Cm g k as in text (for स) Ś1 D2 3 6 7 13 M1 अकरोद्, Cm as in text (for कृतवान्) Ś1 राजन् (for राजा) —b) D2 कुशनाभ, D3 स, G3 तु (for सु) —For 20$^{ab}$, Ñ V B D1 10 11 13 subst while D2 3 7 ins after 19 (transp)

782* स श्रुत्वा परया लक्ष्म्या कुशनाभोऽन्वितो नृपम् ।

[D2 repeats 782* after l. 1 of 784* D1 तद् (for त) B4 [S]न्वित (for °न्वित) B4 नृप, D1-3, 7 13 गुणै (for नृपम्) ]

—D2 3 om 20$^{cd}$ —c) Ñ V B D1 10 11 13 ता कन्या (for काकुत्स्थ) —d) D6 13 दृष्ट, Cm as in text (for दातुं) D13 om तदा Ñ V B D10 11 13 प्रदातु(V3 °दृजा) मुपचक्रमे, D1 दातुकाम स भूपति —After 20, D1 ins.

783* पूजयामास धर्मज्ञो धर्मदत्तं महाबलम् ।

21 Ś1 om (hapl.) 21-23 D2 repeats 21 after 782*(1) —a) T3 त*°, M4 समा° (for तमाहूय) Ñ V B1 3 D10 11 13 स तमाहूय धर्मज्ञो(V4 °ज्ञ), B4 स तं चाहूय धर्मज्ञो —b) V2 धर्मदत्तं Ñ V B1-3 D4 10 11 T2 G1 M1 4 °पति, D1 नराधिप, D11 °पते (for महीपतिः). —c) Ñ V2 4 B D1 10 11 13 M4 तस्मै, D3 रा*, Cg as in text (for राजा) V1 ददौ तस्मै कन्यानां

22 Ś1 om 22 (cf v l 21) —a) Dt D4 5 G1 तदा, D1 तथा, D11 यथा, Cg as in text (for तत) k(ed) Cg पाणीन् —d) D11 तथा (for यथा) —For 22, Ñ V B D1 3 7 10 11 13 M4 subst.

784* यथाक्रमं स सर्वासां तासामनुपमद्युति ।
जग्राह विधिवत्पाणीन्ब्रह्मदत्तो नराधिप ॥

[(l 1) N2 सु, B4 हि, D11 13 च (for स) —After l 1, D2 repeats 782*, 21, l. 1 (784*) —(l 2) D11 विधिवत् V4 D13 M4 पाणिं, D1 6 11 पाणी (for पाणीन्) ]

23 Ś1 om 23 (cf v l 21) —a) Dt D4 5 M3 Ct तदा, Cg k as in text (for तत) —b) D9 विकुब्जा (corrupt) (for विकुब्जा) D2 -ज्वरा, T2 -स्वरा (for -ज्वरा) D2, 3 6, 7 13 विज्वरे विमले (D2 °*) शुचि (D2, 3 °चि) —D2 7 transp 23$^{cd}$ and 24$^{ab}$ —c) Dt D1 3, 6-8, 12, 14 युक्त (for युक्ता) —d) Dt D4 6 8, 9 T1 G1 3 5 M4 5 Ct बभौ, Cg k as in text (for बभु) Ct प्राप्त T2 तथा (for तदा) G3 damaged for शतं तदा D1, 3, 5 7 13 कन्याशत (D13 °**)मभूत्तदा. ⊛ Cg शतं कन्या बभु । विसर्गलोप आर्षः । बभौ कन्याशतमिति पाठे तु, Ck कन्याशतमिति मकार लोप आर्षः । ⊛ —For 23 Ñ V B D1 10 11 13 M4 subst. while D2 3 7 ins after 23 (D3 7 after 24$^{ab}$ transp)

785* तेन च स्पृष्टमात्रेषु ता पाणिषु गतव्यथा ।
बभूवु सर्वश कन्या रूपौदार्यगुणान्विता ।

[D2 3, 7 om l. 1 —(l 1) V4 तेनाशु (for तेन च) M4 तद् (for ता) V3 गतामय, D1 °ज्वरा (for गतव्यथा) D11 तेन संस्पृश्यमानास्ता सर्वा पाणा गतव्यथा —(l 2) D1-3, 7 सर्वा (for सर्वश) ]

24 D2, 7 transp 24$^{ab}$ and 23$^{cd}$ —a) Ñ V1 2 B D1 2, 7 10 11 13 ता, V3 तां, V4 D11 M4 तां, Cg k t as in text (for स) D2 स्पृष्ट्वा, D3 *ष्ट्वा (for दृष्ट्वा) D5 T1 2 G2 3 4 M3 Cm, tp भग्ना, Cg k t as in text (for मुक्ता) —b) Ś1 D1-3 6 7 13 कुशनाभ(Ś1 D1 7 °भ )सुतास्तदा —After 24$^{ab}$ D2 7 ins (om l 1) 785* —c) Cg हर्षं (as in text) Ś1 D1-3, 6, 7 13 हर्ष(D1 °र्षाद्)बाष्पा(D1 बाष्प्यः [sic] D13 °बाश्या)कुलेक्षण. —For 24$^{cd}$, Ñ V B D10 11 13 M4 subst.

786* विस्मयं परमं चक्रे मुमुदेऽभिननन्द च ।

[V1 D13 [S]वि°, V2 प°, V3 चाभिननन्द (hypermetric) (for ऽभिननन्द) D11 मुमुदेव नरेश्वर (for the post half) ]

25 V2 om. 25 and 26. —a) B4 कृत्वोद्वाहं V1, 2, 4 D3 M4 च (for तु) Ś1 D6, 12 13 राजा(D13 °ज्ञा) वै (for

इन्द्रस्तु मेषवृषणस्तदा प्रभृति राघव ।
गौतमस्य प्रभावेन तपसश्च महात्मनः ॥ १०
तदागच्छ महातेज आश्रमं पुण्यकर्मणः ।
तारयैनां महाभागामहल्यां देवरूपिणीम् ॥ ११
विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः ।
विश्वामित्रं पुरस्कृत्य आश्रमं प्रविवेश ह ॥ १२
ददर्श च महाभागां तपसा द्योतितप्रभाम् ।
लोकैरपि समागम्य दुर्निरीक्ष्यां सुरासुरैः ॥ १३
प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव ।
धूमेनाभिपरीताङ्गीं दीप्तामग्निशिखामिव ॥ १४
सतुषारावृतां साभ्रां पूर्णचन्द्रप्रभामिव ।
मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥ १५

G 1 50 16
B 1 49 15
L 1 45 15

D2 3.5 7 12 ते म, N2 B3 D10 च (Ñ2 m ]न, V3 B2 न तु [by transp ]) श्रुत्वे, Cv r g t as in text (for $^d$)

10 $^a$) Ñ2 V1 3 4 B1 3 4 D10 13 M4 च, B2 स, Cg as in text (for तु) V4 [अ]भृत्स°, D3 वृषभणस्, D14 °षणे, G3 °षणौ (last three sic) (for मेषवृषणस्) —$^b$) Ś1 Ñ2 V2 B2 3 4 D3 5 7 13 M4 तत (for तदा) D7 राघवौ —$^c$) V1 B1 4 गौतमस्य Ś1 V1-3 B D1 5 11 प्रभावेण —$^d$) Dt D2-4 6-8 Ct तपसा, Cg as in text (for तपसश्) D1 12 तु, D1 3 7 11 सु (for च) T3 M3 (before corr ) तापसस्य Ś1 D6 तपस सुमहत्फलं, Ñ2 V B D10 13 M4 मभूदमिततेजस (B4 erroneously repeats after 12 from प्रभृति in 10$^b$ up to मिवते)

11 $^a$) D1 3 7 9 तस्मादागच्छ D3 महाबाहो, D1 3 T2 3 G1 3 (before corr ) 4 M3 महातेजा Cm k t as in text (for °तेज) Ś1 D6 11 12 तस्मादागच्छामहे तस्य —Note hiatus between $^a$ and $^b$ —For 11$^{ab}$ Ñ2 V B D10 13 M4 subst

1020* तस्मात्प्रविश रामाशु गौतमस्याश्रमं विभो ।

[ V1 lacuna for त in तस्मात् Ñ2 B3 D10 प्रविश्य D13 पश (for प्रविश) V3 3 चाशु ( sic ) M4 राम त्वम् (for रामाशु) गौतमस्य B4 प्रभो (for विभो) D13 गौतम मुनिसत्तम M4 मयाश्रम प्रभो (for the post half) ]

—$^c$) Ś1 Ñ2 V1 3 B1 3 D1-3 5 6 7 10 11 13 °यैतां, D12 तारेय* (sic) G3 °यैता, M4 मोचयस्व, Cm t as in text (for °यैनां ) D12 महाभाग (with hiatus) —$^d$) Ś1 चाहल्या, D1 3 7 12 अहिल्या Ck as in text (for महल्यां) Ś1 D5 12 कामरूपिणीं, Ñ2 V3 B D10 13 M4 शापदै (B1 °त्रि) ता(V3 B2 D13 °तात्) V1 पतिविवल्लता (sic) V2 4 °मेवेष्टता, Cl t as in text (for देवरूपिणीम्) D1 (in gloss) दयेन ब्रह्मणा स्वरूपेण अहल्या निर्मिता

12 $^b$) Ñ2 V B D10 13 M4 रामः सौमित्रिणा सह —$^c$) V1 lacuna for विश्वामि ☞ D3 om (hapl ) from 12$^d$ up to 1$^c$ of Sarga 49 —Note hiatus between $^c$ and $^d$ —$^d$) Ś1 D1 3 5 6 7 11 12 प्रविवेश महावन(D11 °श्रम), Ñ2 V B D10 13 M4 प्रविश्याश्रमं तत (M4 पुन ), D14 T1 2 G1 4 तम श्रममथाविशत् —After 12 B4 erroneously repeats from प्रभृति in 10$^b$ up to मिवते in 10$^d$ (cf v l 10$^d$)

13 D3 om 13 (cf v l 12) —$^a$) Ś1 Ñ2 V B D1 3 5 7 9-13 M3 4 स(D12 स ) ददर्श(D9 ददर्श स [by transp ]) Cg as in text (for ददर्श च) M4 ददर्श तम्, Cm °गम् (for महाभागा) —$^b$) Ś1 D1 (in gloss परिपुष्टद्युतिं) 3 5 12 [अ]भ्युदितप्रभा, V3 B3 M4 (before corr ) [अ]द्योतितप्रभा Cm g k t as in text (for $^b$) —$^d$) Dt T1 M3 दुर्निरीक्षा Cm g k as in text (for $^{cd}$) —For 13$^{cd}$, Ś1 D1 3 5 7 9 12 subst

1021* एकामथ समासाद्य दुर्धर्षामसुरै सुरै ।

[ D1 12 दुर्दर्शा (for दुर्धर्षाम्) D1 3 5 सुरासुरै, D12 असुरा सुरै (for असुरै सुरै ) D7 सुदुर्दर्शां सुरासुरै, D9 दुर्निरीक्ष्यां सुरासुरै (=13$^d$) (for the post half) ]

while Ñ2 V (V3 after 15) B D10 11 13 M4 subst

1022* सेन्द्रैरपि सुरै साक्षादनालक्ष्या समागतै ।

[M4 मर्त्यै (for साक्षाद्) V2 अप्रधृष्या (for अनालक्ष्या) D11 सहा°, M4 °गमे (for समागतै ) ]

14 D3 om 14 (cf v l 12) —$^a$) B1 प्रयता, M3 Ck प्रयत्न, Ct as in text (for प्रयत्नान्) V4 यद्वद् (for धात्रा) —$^b$) V2 3 D6 दिव्य (for दिव्या) —D1 9 T3 om (hapl ) 14$^{cd}$ —D14 T1 2 G1 transp 14$^{cd}$ and 15 —$^c$) V2 4 B3 4 D6 11 [अ]ति, D14 T1 2 G1 4 M3 4 [अ]पि, M2 च, Ct as in text (for [अ]भि ) D11 -परीताया (for परीताङ्गीं) G3 4 M1 धूमेनाप्यग्निशिखामेषो (G3 °ता) —$^d$) D11 दीप्तिम् (sic) (for दीप्ताम्)

15 D3 om 15 (cf v l 12) B1 om (hapl ) 15$^{ab}$ D14 T1 2 G1 transp 14$^{cd}$ and 15 —$^a$) Ś1 N2 V B2-4 D1 3 5 7 10 13 तुषारेण, D1 सु°, Cv r as in text (for सतुषार ) V2 सर्वां V3 B2 4 साभ्रां, D4 T2 शुभ्रा, D3 साभ्रा, M3 (before corr साभ्र and after corr sec m ) साभ्रा, M1 सौम्या (sic) Cg as in text (for साभ्रां) ☞ Cv r सतुषारावृताम् । स इति वा पदच्छेद । ☞ —$^b$) D11 G3 पूर्णां, D13, T2 पूर्ण (sic) (for पूर्ण ) —D1 3 7 12 om (hapl ) 15$^{cd}$ —$^c$) Ś1 नमोऽम्भसो, V2 मध्यरश्मे (sic) V4 मध्ये तमो, M4 °सा Ck as in text (for मध्येऽम्भसो) —$^d$) B1 पूर्णचन्द्र° (=15$^b$) D14 दीप्तां [illegible]भामिव —After 15 V3 reads 1022*

G 1 50 17
B 1 49 16
L 1 45 16

सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ।
त्रयाणामपि लोकानां यावद्रामस्य दर्शनम् ॥ १६
राघवौ तु ततस्तस्याः पादौ जगृहतुस्तदा ।
स्मरन्ती गौतमवचः प्रतिजग्राह सा च तौ ॥ १७
पाद्यमर्घ्यं तथातिथ्यं चकार सुसमाहिता ।
प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा ॥ १८
पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिस्वनैः ।
गन्धर्वाप्सरसां चापि महानासीत्समागमः ॥ १९
साधु साध्विति देवास्तामहल्यां समपूजयन् ।
तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम् ॥ २०
गौतमोऽपि महातेजा अहल्यासहितः सुखी ।
रामं संपूज्य विधिवत्तपस्तेपे महातपाः ॥ २१

16 D3 om 16 (cf v l 12) D13 om 16[ab] —[a]) D4 [अ]पि; T3 तु; Cg k.t as in text (for हि) D1 2 7 8 -ख्यापेन (for -वाक्येन) —[b]) Ś1 Ñ2 V1.2.4 B2.4 D2-4.12 T G3 M1-3 Ck दुर्निरीक्षा; Cg as in text (for °क्ष्या) —[d]) Ś1 D1 11 M1.4 दर्शनात्; D11 damaged Cm k as in text (for दर्शनम्) —After 16 Ś1 (marg) Dt D4.5.8.12 S Cm k.t ins.

1023* शापस्यास्य तु शान्त्यर्थं तेषां दर्शनमागता ।

[D16 damaged from शा to तु M3 आगमत् ]

17 D3 om 17 (cf v l 12) B1 om 17 and 18 Ś1 reads 17-18[a] in marg —[a]) G1 च, M3 inf lin sec m Cg as in text (for तु) Ś1 Dt D6.11 T1 M3 तदा (D11 °श) D4 [अ]तिथी (for ततस्) M3 [अ]हल्या (for तस्याः) Ñ2 V B2-4 D10.11 दृष्ट्वैव राघवौ (B4 °वस्) तस्याः —[b]) G2 M3 जगाहतुस् (sic) Ś1 Dt D4.5 मुदा M3 तत (for तदा) —[d]) M1 प्रीता (for प्रति) Ś1 Dt D2 6.8 T3 G1 3 M1 हि; M3 (अ)पि (for च) —For 17[cd] Ñ2 V B2-4 D1 2 3 7 10-12 M3 subst

1024* सा च तौ पूजयामास स्मृत्वा गौतमभाषितम् ।

[D16 [ए]तौ (for तौ) D1 2 3 7 12 13 प्रतिजग्राह (for पूजयामास] V3 स्मृत्व (sic) (for स्मृत्वा) M4 गौतमस्य वचः स्मृता (for the post half) ]

18 B1 D3 om 18 (cf v l 17 and 12 respy) Ś1 reads 18[ab] in marg (cf v l 17) D14 damaged from स in [a] up to च in [b] —[a]) T3 G2 तदा (for तथा) —For 18[ab] Ñ2 V B2-4 D10 12 M3 subst.

1025* पाद्याभ्यांलनसत्कारैर्यथावत्प्रीतमानसा ॥

[V B3 पाद्याद्यर्चित M3 पाद्याद्यर्चितैश्च B4 प्रीति (for प्रीत ] ]
while D1 2 6 7 11 13 subst.

1026* -पायत पाद्यमर्घ्यं च चकार मुदिता तयो ।

[D3 8 11 13 अर्घं (for अर्घ्यं) ]

—[c]) Ś1 Ñ2 V B2-4 D1 10 12 M3 रामश्च (Ś1 B4 D1 11 12 °स्तु V2 °स्तौ) D4.5 T1 2 G1 3 M1 2 काकुत्स्थौ (sic) Ct as in text (for काकुत्स्थो) —[d]) Ś1 D1 5 6 7 11 13 G1 यथा Cm.g as in text (for विधि ) Ñ2 V B2-4 D10.12 M3 पूजां तां (V3 °च D1 तां पूजां [by transp ]) विधिवत्तदा

19 D3 om 19 (cf v l 12) —[a]) M3 पपातानु (for महत्यासीद् ) —[b]) Ś1 दिव्य (for देव ) Ś1 D1 4.5 11.12.13 T1 2 G1-3 नि स्वन (for निस्वनै ) M3 देववाद्यानि सस्वनुः Cm t as in text (for [b]) —For 19[ab] Ñ2 V B D10.12 subst.

1027* दध्वनुर्देववाद्यानि पुष्पवृष्टिः पपात ह ।

[V1 3.4 B2.3 सस्वनुर्, V2 ददृशुर् D13 दध्वनुर्ः (for दध्वनुर्) V3 -वाद्यानि (for -वाद्यानि) D13 च (for ह) ]

—[c]) D14 damaged for प्सरसां D1 T3 या (for चा) Ñ2 V B Dt D2-4.10.12 G2.3 M2 3 चैव (B1 °श) (for चापि) —[d]) Dt D4.5 G3 2 M1 समुत्सव ; Cg as in text (for समागम॰) M3 वत्रासीद्गीतनिस्वन

20 D3 om. 20 (cf v l 12) —[a]) Ś1 Ñ2 V B D2 4.5 7 10-12 देवाश्च, M3 चाहल्यां (for देवास्ताम्) —[b]) Ś1 Ñ2 V B D1 2 6 7 10-12 तदाहल्या (D1 2 °हिल्या, D7 °देवी )मपूजयन्, M3 सिद्धास्तत्र शशंसिरे —B1 reads 20[cd] in marg —[c]) D4 तपोबलात्, D11 तपोनल (for °बल ) Ś1 विशुद्धा सा, B3 D1 4.5.7 8 11 10 M3 विशुद्धां च (D1 2.5. 7 11 13 M3 तां, D8 °गां ); T3 विशुद्धांगीं (for विशुद्धाङ्गीं) Ct as in text (for [c]) —[d]) Ś1 वशान्वगात्, D11 वशानुगा (for °नुगाम् ) M3 दृष्ट्वा रामसमागमे —For 20[cd], Ñ2 V B1.3 4 D10 12 subst while B3 ins after 20

1028* विशुद्धा तपसोग्रेण तदा रामसमागमे ।

[V3 तथा (for तदा ) V1 -समागमात् ]

21 D3 om 21 (cf v l 12) —[a]) Ś1 D1 4 6 7 12 गौतमस्तु, D4 गौतमो हि —[b]) D1.5 7 त्वहिल्या , Cm t as in text (for अहल्या ) —[d]) D4 महायशा (for °तपा ) —For 21 Ñ2 V B D10 11 12 M3 subst

1029* गौतमश्च महातेजा दृष्ट्वा दिव्येन चक्षुषा ।
स्वमाश्रमपदं राममागतं प्रत्यपूजयत् ।
समेत्य भार्यया चैव पूतयाहल्यया तदा ।
तयैव सहितो भूयस्तपस्तेपे महायशाः ।

[(l. 1) B1 [अ]थ (for च) —(l. 3) M3 [इ]व (for [ए]व ) M3 तया (for तदा) —(l 4 ) M3 तया (for तथा) V3 तपसा (for सहितो) D13 राम संपूज्य विधिवत्तपस्तेपे महातपा° (=21[cd]) ]

रामोऽपि परमां पूजां गौतमस्य महामुनेः ।
सकाशाद्विधिवत्प्राप्य जगाम मिथिलां ततः ॥ २२

इति श्रीरामायणे बालकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

४९

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ १
रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मणः ।
साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥ २
बहूनीह सहस्राणि नानादेशनिवासिनाम् ।
ब्राह्मणानां महाभाग वेदाध्ययनशालिनाम् ॥ ३
ऋषिवाटाश्च दृश्यन्ते शकटीशतसंकुलाः ।
देशो विधीयतां ब्रह्मन्यत्र वत्स्यामहे वयम् ॥ ४

G. 1. 51. 4
B. 1. 50. 4
L. 1. 46. 4

22 D2 om. 22 (cf. v.l. 12). —b) D11 गौतमाद्. D4.12 T3 M3 महात्मनः (for °मुनेः). Ñ2 V B D13 13 M4 गौ( V1 गो )तमादपिसत्तमात्. —c) Ñ2 V B D10 13 अवाप्य विधिवत्तस्मात्; M4 अवाप्य पूजयित्वा तु. —d) Ś1 D1 3 5.7.11.12 तदा; Ñ2 V B D10.13 M4 प्रति; M3 तपः (sic) (for ततः). G1 जगाम मिथिलाधिपं. —After 22, D1 13 ins., while Ś1 (after 1ab) D2.5 7.8 11 ins. before 1. 49. 1:

1030* विश्वामित्रं पुरस्कृत्य पश्यन्देशान्दिशस्तथा ।

[Ś1 देशं निमेष; D5.7 द( D7 दे )शन्दिश (for देशान्दिशस्). ]

Colophon. D2 6.12 om. (For D6 cf. v.l. 12, the rest cont. the Sarga). —*Kāṇḍa name* Ś1 V4 D2 om. Ñ2 V2.3 B D13 आदि° (B1 then ins. बालचरिते); D5 अयोध्या°. —*Sarga name*: Ñ2 V3 D10.11 अह( D10 °हि )ल्याशापमोक्ष.( V2 °विमोक्ष ); V1 3 4 B1 3 अहल्यादर्शनं, B2 अहल्यादर्शनं शापमोक्ष; B4 D3 अहल्यामोक्षणं (D7 °णः); D1.8 9 अहिल्यामोक्षः. —*Sarga no.* (figures, words or both) V1.3 4 B1 4 D3 13 om. Ś1 (m.) D1 D4.8.14 S (except M4) 49, Ñ2 B2 3 D10 50, V2 D9 58, D1 39, D7 38, D13 —काण्डे—दर्शनं 50. —After colophon, T2 G1 3.4 M2 conclude with श्रीरामाय नमः; G2 श्रीमते रामानुजाय नमः.

49

☞ Ñ1 missing Sarga 49 (cf v.l. I. 33. 8). D6 12 continue the previous Sarga. —Before 1, D2.5.7.8.11 ins. 1030*.

1 D2 om. 1abc (cf. v.l. 1 48.12). Ś1 reads (1st time) 1ab in marg. (*sec. m.*) as in text followed by 1030*, then repeats it as in Ñ2 etc. —a) V1 om.; D1 D5 कृत्वा (for गत्वा). —b) Ñ2 V B D1.3 5. 7.9-13 M4 द्विजं रामः सलक्ष्मणः. —d) V2 यज्ञराजं (for °वाटम्). Ś1 Ñ2 V B D1-3 5 7.10-13 ददर्श ह (D11 सः).

2 ab) D9 मुनिशार्दूल. Ñ2 V B D11.13 तं रामो मुनि (V1 damaged for मो मुनि )शार्दूलं दृष्ट्वा यज्ञमभाषत. —cd) G1.3 साधु यज्ञ; M4 महती तु (for साध्वी यज्ञ-). Ñ2 V B D10 13 अहो समृद्धिर्यज्ञस्य (for c). Ś1 D1-3 5.7.9.11.12 साध्वयं सुसमृद्धोऽस्य जनकस्य महाक्रतुः.

3 D14 partially damaged for a. —a) D11 T G1-3 M1 च; M4 हि (for [ह] ह). V1 **स्राणि, Ś1 D5 7 बहवः शतसाहस्रा( Ś1 °स्रये [sic] ); D1 बहूनां हि सहस्राणां; D3 8 7 बहवो हि शतसाहस्रयो( D3 °स्रा; D5 °स्रो ); D12 बहवोऽपि सहस्रा* (sic). —b) D9 -निवासिनः. —cd) G1 (after corr. as in text) महातेजा (for °भाग). Ś1 D1-3 5 7.9 11 12 ब्राह्मणानां ससैन्यानां (D5 transp.) देश( Ś1 °देद् )भाषाविचारिणां. —After 3, D11 ins. l. 2-3 of 1031*, thereafter reads 5ab as in Ñ2 etc. repeating it in its proper place.

4 a) M4 बहव· (for दृश्यन्ते). Ś1 D1-3 5 7 9 11 12 यज्ञवाटा( D2 °द [sic], D5 11 12 °भागा )श्च बहवः. —b) D2 5.7 9 -कृत; Ck t as in text (for -शत-). —D14 partially damaged for c. —c) D7 दिशो (for देशो). —d) Ś1 D1-3 5 7 9.11 12 वासः सुखी( D1 2 सुखः; D5 7 11 सुखो ) भवेत् (for वत्स्यामहे वयम्). —For 3c-4, Ñ2 V B D10 13 M4 (l. 1 only for 3cd) subst., D11 ins. after 3

1031* समागतानां विप्राणां देशभाषाधिकारिणाम् ।
दृश्यन्ते ब्राह्मणानां च वासा ब्रह्मरथाः कृताः ।
देशः परीक्ष्यतां ह्यद्य वत्स्यामो यत्र वै वयम् ।

G 1 52 5
B 1 50 5
L 1 46 4

रामस्य वचनं श्रुत्वा विश्वामित्रो महामुनिः ।
निवेशमकरोद्देशे विविक्ते सलिलायुते ॥५
विश्वामित्रं मुनिश्रेष्ठं श्रुत्वा स नृपतिस्तदा ।
शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितम् ॥ ६
ऋत्विजोऽपि महात्मानस्त्वर्घ्यमादाय सत्वरम् ।
विश्वामित्राय धर्मेण ददुर्मन्त्रपुरस्कृतम् ॥ ७
प्रतिगृह्य तु तां पूजां जनकस्य महात्मनः ।
पप्रच्छ कुशलं राज्ञो यज्ञस्य च निरामयम् ॥ ८
स तांश्चापि मुनीन्पृष्ट्वा सोपाध्यायपुरोधसः ।
यथान्यायं ततः सर्वैः समागच्छत्प्रहृष्टवत् ॥ ९

---

[D12 om 1 1 —(1 1) M4 इत्युक्त्वा V1 damaged for तां विश्वा V B2 विश्वा(B2 °वा)रिणां (for [श्र]विसर्पिणाम्) —For ms see below —(1 2) V4 रम्य (for वाच्या) B2 (m also as above) -वृत्ता (for रथा) D11 तत (for कृता) D13 निवासाश्च पृथक्पृथक् (for the post. half) —(1 3) V3 सपीदृतां (for परीक्ष्याता) V4 * (lacuna)स्थ (for दृष्टो) B3 वसानो (for वत्स्यामो) ]
—After 1 1, B3 ins

1032* ज्ञातिना सिद्धपर्णाणां मुनीनां च महात्मनाम् ।

5 D11 reads 5^ab twice (cf v1 3) —^a) D4 वच*, D7 च वच (for वचनं) Ñ2 V B D10 11 इति रामस्य श्रुत्वा —^b) Ś1 D1-3 5,7 11 (second time) 12 M4 °वरः, Ñ2 V B1 3,4 D10 12 °मना, B3 °तपा (for महामुनिः) —^c) V1 Dt D2,6 8 G2 M1 निवासम् (for निवेशम्) D13 देशे, M4 तत्र (for देशे) V2 विवेश नगरोद्देशे —^d) M3 विविक्त Ck t °क्ते (as in text) Ś1 D3 11 12 सलिलान्विते, Ñ2 V1 B3 4 D8 10 11 सलिलाप्लुते, V3,4 Dt D4,6-8 (before corr as in text) G1-3 M1 2 Ck,t सलिलान्विते B1 विविक्तसलिलैर्युते, Cm,g as in text (for ^d)

6 D14 damaged for मुनिश्रेष्ठं श्रुत्वा —^a) Ś1 D2,5 5 7 11 12 मुनिं प्राप्तं, Ñ2 V B D10 13 M4 ऋषिं प्राप्तं, Dt D2 6 8 T2 M1 2 Cm मनुप्राप्तं, G1 मुनिं° (for मुनिश्रेष्ठं) —^b) V4 damaged T3 दृष्ट्वा (for श्रुत्वा) V1 2 B1 M4 [अ]थ, V3,4 D3 G2 M1 तु, B2 च (for स) Ñ2 V1-3 B D10 12 मिथिलेश्वर, V4 M4 मिथिलाधिप (for नृपतिस्तदा) Ś1 D3 5 6 7 11 12 जनकः सह मन्त्रिभिः, Dt D6 8 श्रुत्वा नृपवरस्तदा —^d) Ś1 D2 5 6,7 11 12 M4 पुरोधसम्, V3 सुपु° (hypermetric) (for पुरोहितम्) Ñ2 V B D10 12 शकल्मषं, Dt D4,5 अनिंदित, G2 M2,3 अरिंदम (M3 °म), M4 उपागमत् (for अनिन्दितम्) —After 6 D6 8 14 S (except M4) Cg k (position uncertain) ins, while Dt D6 8 ins after 7^ab

1033* प्रत्युज्जगाम सहसा विनयेन समन्वितः ।

[M3 सहसो (for सहसा) T3 विस्मयेन (for विनयेन) ]

7 ^ab) M4 ऋत्विजश्च महात्मानम् (for ^a) D14 damaged partially for 7^b G1 6 ह्यर्घ्यम् G2 M1 4 अर्घ्यम् (for त्वर्घ्यम्) D4 T3 G1 3 M1,3 सत्वरा Ś1 D1 3,5 7 11,12 ऋत्विजपरिवृत्(D3 °ः) तत्पूर्णमर्घ्यं(Ś1 D1 7 °र्घ्यं)मादाय धर्मवित् —For 7^cd Ñ2 V B D10 12 subst

1034* ऋत्विग्भि सहितश्चान्यैरादायार्घ्यं त्वरान्वित ।

[Ñ2 V2 B1 2 D10 सहितै(B3 °ता)श्च, B3 (m as above) सहित (for सहित) V [अ]र्घं (for [अ]र्घ्यं) ]

—^c) Ñ2 V1 2 4 B D10,12 सत्कृत्य Cm t as in text (for धर्मेण) V3 विश्वामित्र पुरस्कृत्य —^d) Ś1 Ñ2 V B Dt D1 3 5-8 10-13 Ct ददौ (for ददुर) Ś1 Dt D6 8 Ct धर्मं, Cg as in text (for मन्त्र)

8 ^a) Ñ2 V B1 3 4 D10,12 M4 स, B3 D14 T1 3 G2 M1 च, D2 om (submetric) (for तु) —^b) Ñ2 V B D10,12 जनकान्मुनिसत्तम (V4 °मा), —^d) Ct यज्ञस्य (as in text) Ś1 D1 3 5 11 12 राष्ट्रे (Ś1 °ष्ट्रं) च (Ś1 D3 चा)पि D6 7 राष्ट्रे राज्ये (for यज्ञस्य च)

9 ^a) D14 partially damaged G4 तान (for तांश्च) Dt D6 8,9 [अ]थ (for [अ]पि) D1 G1-3 M1,3 मुनिं (for मुनीन्) D6 T3 G1 M3 दृष्ट्वा (for पृष्ट्वा) —^b) T3 पुरःसर, Cg as in text (for पुरोधस) —^c) D4 M4 ऋषि°, G1 3 मुनि°, G2 M1 मुनिवरे, M3 ऋषीन्सत्र (sic) (for ततः सर्वैः) Dt D6,8 यथार्हमृषिभिः सर्वैः, D6 T3 यथा (D6 °था)न्यायमृषीन्सर्वान् —^d) T3 समागम्य, Cm as in text (for समागच्छत्) T3 समागच्छत हृष्टवत्, Ct as in text (for ^d) —For 9 Ś1 D1 3 5 7 11 12 subst

1035* तांश्चैव स मुनिं सर्वानुपाध्यायपुरोधस ।
समागच्छद्यथान्याय यथाविधि यथावय ।

[(1 1) D6 [अ]पि (for [ए]व) D3 -पुरोधसां, D5,7 पुरोगमान् (for -पुरोधस) —D3 om (hapl.) from 1 1 up to 11 —(1 2) Ś1 D5 11 विध, D1 -वय, D3 विधि (for विधि) Ś1 D6 [अ]र्चेन, D1 -वच, D11 -वय (for -वय) ]

—For 8^c-9 Ñ2 V B D10,12 M4 (1 2-3 for 9 only) subst

1036* पप्रच्छानामय चैव यज्ञस्यामृद्धयमेव च ।
तांश्चैवान्यान्मुनीन्सर्वानागतान्स पुरोहित ।
यथान्याय यथायोग्यं पर्यपृच्छदनामयम् ।

[(1 1) V4 [अ]पि (for [ए]व) V4 सामर्थ्यं (for -सामृद्धय) —(1 2) V4 तथैव (for तांश्चैव) M4 ऋषीन् (for मुनीन्) V4 B3 पुरोहितान्, M4 पुरोधस —(1 3) V2-4 B1 3 यथायोग M4 यथायोग यथान्याय (for the prior half) ]

अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ।
आसने भगवानास्तां सहैभिर्मुनिसत्तमैः ॥ १० ॥

जनकस्य वचः श्रुत्वा निषसाद महामुनिः ।
पुरोधा ऋत्विजश्चैव राजा च सह मन्त्रिभिः ॥ ११ ॥

आसनेषु यथान्यायमुपविष्टान्समन्ततः ।
दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् ॥ १२ ॥

अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ।
अद्य यज्ञफलं प्राप्तं भगवद्दर्शनान्मया ॥ १३ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगव ।
यज्ञोपसदनं ब्रह्मन्प्राप्तोऽसि मुनिभिः सह ॥ १४ ॥

द्वादशाहं तु ब्रह्मर्षे शेषमाहुर्मनीषिणः ।
ततो भागार्थिनो देवान्द्रष्टुमर्हसि कौशिक ॥ १५ ॥

इत्युक्त्वा मुनिशार्दूलं प्रहृष्टवदनस्तदा ।
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रयतो नृपः ॥ १६ ॥

इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ।
गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ १७ ॥

G 1 51 17
B 1 50 18
L 1 46 16

---

10 D3 om 10 (cf v l 9) —$^a$) V3 तं च (for राजा) —M4 om (hapl) from 10$^c$ up to l 3 of 1037* D14 damaged from $^c$ up to हैं in $^d$. —$^c$) Ñ2 V B D10 (all with hiatus) 13 भगव (V1 व damaged) न्मुसे (B1 °न्हुद्य, D13 °न्मूहम्), D4 13 G1 3 M3 भगवन्नास्ता —$^d$) Dt D4 5 6 14 T1 2 G1 4 मुनिपुंगवै Ś1 Ñ2 V2-4 B (B1 m also as in V1) D1 5 6 7 10 11 13 उपवेष्टु (Ś1 D1 4 5 7 11 श्रम सोढु) मिहार्हसि (B1 reads from मिहार्हसि in $^d$ up to उपवेष्टु in 1037* in marg), V1 उपवेष्टुम* र्हसि, D12 सभे मोढुमर्हसि (submetric)

11 D3 om 11 (cf. v l 9) —$^c$) Ś1 D5 12 पुरोहितो द्विजाश्चैव, D1 5 7 11 पुरोहितर्त्विज (D2 °जै, D11 °*द्विजो) श्चैव (D3 सर्वे), M3 पुरोधसः ऋत्विजैश्च

12 $^a$) D14 partially damaged Ś1 D1 6 12 आसने तु (D5 °*) D3 समागच्छन्, D7 11 M5 °च, Cg as in text (for आसनेषु) D2 यथायोग्यम् (for यथान्यायम्) —$^b$) Dt D4 5 6 T2 G M1-3 उप (M3 °*[lacuna]) विष्ट, Cg °ष्टान् (as in text) Ś1 D5 12 उपविष्ट (D5 °ष्टा) यथाविधि, D1-3 7 11 उपविष्टं महामुनिं (D2 7 [before corr] °नि) —$^c$) Ś1 D1 2 5 11 12 नरपतिस्, D3 7 नरवरस्, G1 तु° (for स नृपतिस्) —$^d$) D3 2 अभाषत (for अथाब्रवीत्) —For 11-12 Ñ2 V B D10 13 M4 (l 4 only for 12$^{cd}$ cf v l 10) subst while D13 ins l 4 only after 12

1037* जनकेनैवमुक्तोऽथ विश्वामित्रो महामुनि ।
निषसाद ततश्चैव स राजा सह मन्त्रिभि ।
उपविष्टमुपेत्येदं कृताञ्जलिरभाषत ।
अमृतस्येव संप्राप्तिरद्य मे भगवन्मुने ।

[B1 reads up to उपवेष्टु in l 3 in marg (cf v l 10) —(l 1) V3 B3-4 उक्तस्तु B4 महायशा —(l 2) B1 °श्चैव सह (by transp) —(l 3) B3 उपवेष्टुम् V2 उपैति (for उपेत्य) V2 3 [प]ष, B1 [प]ष (for [ए]दं) —(l 4) V4 B3 4 M4 [प]व (for [इ]व) V1 2 सङ्गतिर्, V3 समीतिर् (for संप्राप्तिर्)]

13 $^a$) T2 अथ (for अद्य) G1 (after corr as in text) हि (for मे) Ś1 D1-3 5 7 11 12 अद्यायं (D1 2,11 °द्य मे) सफलो यज्ञो —$^b$) Cg k t सफला (as in text) Ś1 सहर्ष°, D1 2,4 11 12 महर्षदैवते, D3 7 दर्शनाद्दैवता, G1 3 °देवता, G2 सफलै° (for सफला दैवतैः) Ś1 D1-3 5 7 11 12 कृत, G1 3 कृता, Cg k t as in text (for कृता) —D13 M4 om (hapl) 13$^{cd}$ —$^c$) Ñ2 V B D10 फलवाशिद. —$^d$) Ś1 D1 6 7 11 12 यत्र स, D3 मुने त्वद्, D6 भगवन् (for भगवद्) Ñ2 V B D10 समाभ्या (V1 2 °खा, V3 समेहा) गमनाच्च

14 $^a$) V3 (अ)नुगृहीतोऽथ —$^b$) B1 यदि (for यस्य) Ś1 Dt D3 6 7 11 12 14 M3 मुनिपुंगव, Ñ2 V B D10 13 M4 त्व महामुने —$^{cd}$) Ś1 D1-3 6 7 11 12 यज्ञावसान संप्राप्तो (D14 यज्ञस्यावसथ प्राप्तो) ब्रह्मं मुनिवरै सह

15 $^a$) Cm g k t द्वादशाह (as in text) Ś1 D1-3 5 7 11 12 महर्षे द्वादशाहं तु (D5 त्वम्) —$^b$) D2 पुनस् (for शेषम्) T2 महर्षिभि, Cm g k as in text (for मनीषिण) Dt D3 5 दीक्षामाहुर्मनस्विन —For 14$^c$-15$^d$, Ñ2 V B D10 13 M4 subst

1038* यज्ञस्यावभृथं पुण्यं द्रष्टासि सबवानुग ।
द्वादशाह च शेष मे यज्ञस्याहुर्द्विजातय ।

[(l 1) V4 (अ)वमन (for [अ]वभृथ) V4 द्रष्टासि, M4 द्रष्टासे M4 सबान्धुग —(l 2) M4 द्वादशाहस्य V4 द्वादशाश्वदोर्ष च (for the prior half), M4 मनीषिण (for द्विजातय) V3 यज्ञस्यास्य भविष्यति (for the post half)]

—$^c$) Ś1 D1 3 5 7 11 12 यज्ञ, M3 damaged for त (for ततो) D6 (after corr as in text) भोगार्थिनो —$^d$) Ñ2 V1-3 B D10 13 इह द्रष्टुमुपागतान्, V4 इह भक्षस्यपावनात् (sic) M4 द्रष्टासि मुनिभि सह

16 $^b$) G2 सदा (for तदा) —M3 reads 16$^{cd}$ *inf lin sec m* —$^c$) D14 त्वं (for तं) D6 प्रति (for परि) —For subst see below

17 =I 47 2 —$^c$) Dt D4 5 3 तुल्य (for सिंह) T2 नासिर् (sic) M3 गतौ (for गती) —$^d$) D6 वृषभान्वितौ

G. 1.51.18
B. 1.50.18
L. 1.46.17

पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ।
अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ १८
यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ ।
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ १९
वरायुधधरौ वीरौ कस्य पुत्रौ महामुने ।
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ॥ २०
परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ।
काकपक्षधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ २१
तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः ।
न्यवेदयन्महात्मानौ पुत्रौ दशरथस्य तौ ॥ २२
सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ।
तच्चागमनमव्यग्रं विशालायाश्च दर्शनम् ॥ २३

---

**18** = I.47.3. —D1 D4.6.8 om. 18$^{ab}$. —$^{c}$) Ś1 D1–3.5.7.11.12 कस्येमौ (D5.12 °मौ) देववर्णिनौ (D11 °वर्णिणौ).

**19** = I.47.4. —Ś1 reads 19$^{cd}$ in marg. (cf. v.l. 1041*). —$^{a}$) Ś1 D1 D4.6.8 G2 M1.2 [इ]व; D9 [इ]ह (for [ए]व). D4.14 T1.2 संप्राप्तौ, M1 प्राः° (for गां प्राप्तौ). —$^{b}$) G1 [अ]मरः (for [अ]मरौ). —After 19$^{ab}$, G1.2 M2 (after 19, *inf. lin. sec. m.*) ins., while G2 M2 ins. l. 5 only after 1040*.

1039* पुण्डरीकविशालाक्षौ वरायुधधरावुभौ ।
गोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ।
काकपक्षधरौ वीरौ कुमाराविव पावकी ।
रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणौ ।
प्रकाशय कुलमस्माकं मामुद्दर्तुमिहागतौ । [5]
[(l. 4) G1 -[अ]पहारिणौ.]

—$^{d}$) M1 (after corr. *sup. lin. sec. m.* वा as in text; before corr.) च. T2 कन्यका (sic) (for कस्य वा).

**20** Ś1 reads 20 in marg. (cf. v.l. 1041*). G2.3 om. (hapl.) 20$^{ab}$. M1 reads 20$^{ab}$ (*sec. m.*) in marg. G4 om. (hapl.) 20$^{d}$–21$^{c}$. T2 G1 M1 transp. 20$^{ab}$ and 20$^{cd}$. —$^{c}$) Ś1 भूषयंताम्. —$^{d}$) Ś1 सूर्यचंद्रा॒त्र (by transp.).

**21** G4 om. 21$^{abc}$ (cf. v.l. 20). —$^{b}$) T2 G1 रूपेण- (for प्रमाण-). —After 21$^{ab}$, G2 M1 ins.:

1040* किमर्थं च नरश्रेष्ठौ संप्राप्तौ दुर्गमे पथि ।

—Thereafter cont. l. 5 of 1039*.

—$^{c}$) G1.2 कस्य पुत्रौ मुनिश्रेष्ठ. —For 16–21, Ñ3 V B D10.11 (om. l. 6 and reads 18$^{cd}$ as in text).12 M4 subst., while Ś1 D1–3.5.7.12 subst. l. 3–5 and 7–8 for 17–18$^{ab}$ and 19–21 (Ś1 for 19$^{cd}$ and 21$^{cd}$ only) respy.

1041* उपयातामिह सप्रीत्या सहैभिर्ब्रह्मवादिभिः ।
एतान्यहानि सुसुखं ततो यास्यथ सत्कृता ।
एतौ च मुनिशार्दूल कुमाराविव पावकी ।
काकपक्षधरौ कस्य किमर्थं चाभ्युपागतौ ।
व्यूढोरस्कौ महाबाहू खड्गतूणधनुर्धरौ । [5]
अश्विनौ सदृशौ रूपे कस्यातिप्रियदर्शनौ ।
किमर्थं सुकुमाराङ्गावध्वान संश्रितावुभौ ।
बालावेवानवद्याङ्गौ श्रोतुं कौतूहलं मम ।

[(l. 1) D12 M4 प्रीत्ये (for प्रीत्या). V3 त्रिरात्रमिह वत्स्येथाः, D11 उष्यतां सत्कृतो भवता (for the prior half). M4 [ए]नैर् (for [ए]भिर्). V1 damaged for ब्रह्म.—(l. 2) Ñ3 B1 स्वसुखं, V4 D10 सुखं, B3 सुसुखं, D11 यास्यसि (for यास्यथ). D11 सत्कृत.—(l. 3) Ś1 D1–3.5.7.11.12 M4 इमौ (for एतौ). M4 कौ (for च). D3 नर- (for मुनि-). V1–3 पावकौ.—(l. 4) B4 -पुच्छधरौ. Ś1 D1–3.5.7.11.12 वीरौ (for कस्य). V1 damaged, V4 चाभ्यु°, B3 वाभ्यु°; D12 M4 चाभ्यु° (for चाभ्युपागतौ). Ś1 D1–3.5.7.11.12 कस्येमौ (D11 °मौ) मुनिपुंगव (D3.12 °वौ) (for the post. half).—(l. 5) B1 दीर्घभुजौ (for महाबाहू). M4 -तूणी.—After l. 5, Ś1 D1–3.5.7.11.12 read 16$^{cd}$ as in text and om. l. 6.—(l. 6) V1 B4 D12 M4 अश्विनौ; V3 अनयो°; B1 आश्विन्यो (sic) (for अश्विनौ°). V3 सदृशे रूपे, M4 रूपसदृशौ (for सदृशौ रूपे). V1 [इ]मौ, D12 [ए]तौ (for [अ]ति-). V1 -दर्शिनौ.—(l. 7) B4 किमेतौ (for किमर्थं). Ś1 D1–3.5.7.11.12 च मुनिश्रेष्ठ (for सुकुमाराङ्गाव्). D12 अरण्य (for अध्वान). Ñ3 B3 D10 समागतावुभौ, M4 वै समागतौ (for संश्रितावुभौ). Ś1 D1–3.5.7.11.12 प्राप्तौ दुर्गमान्पथ° (D1 °न्पुर and gloss दुर्गमाणि स्थानानि) (for the post. half).—After l. 7, Ś1 reads 19$^{cd}$, 20–21$^{b}$ in marg.—(l. 8) B3 (m. also, originally बाल°) देवाविव. Ś1 D1–3.5.7.11.12 अत्र (D3 इर, D11 चिर) ह्येतौ महत्, M4 एव महातेज (for एवानवद्याङ्गौ). Ś1 D1–3.5.7.11.12 इच्छाम्य (D3.12 °मि [sic]) अद्य, M4 °हि मे (for कौतूहलं मम).]

**22** $^{a}$) Ñ3 V B D10 तस्यैतद्; D11 स तस्मै (for तस्य तद्). —$^{b}$) Ś1 D1–3.5.7.11.12 महामुनिः. T2 विश्वामित्रोऽभ्यभाषत. —$^{c}$) D4.9 निवेदयन्. M3.4 अमेयात्मा (for महात्मानौ). D1 D6.8 Cg निवेदयदमेयात्मा. —$^{d}$) Ñ1 V1–3 B D10.11.12 सुतौ (for पुत्रौ).

**23** D3.7 om. 23$^{a}$ reading 23$^{c}$ in its place. Ś1 Ñ3 V B D1.2.5.10–12 M4 transp. 23$^{a}$ and 23$^{c}$. —$^{a}$) V3 D1.2 निवासस्य. M4 सिद्धाश्रमादागमनं. —$^{b}$) Ś1 V4 B1.2.4 D1–3.5.11–12 च तं वधं. Ñ3 V1–3 B3 D7.10 च तद्वध, G1 (also as in text) °तदा, G3 वधस्य°, M4 °च त (for वधं तथा). —After 23$^{ab}$, D9 wrongly repeats 22–23$^{ab}$. —$^{c}$) Ś1 B3 D5.11.12 तथा, B1 यथा, D1 D4.6–9 Ct तत्र, D12 G3 M1 तत्र; Cm as in text (for तच्च). Ś1 D3.12 मत्युर्धं; V1 मध्यय, D11 अचर, Cm g as in text (for अव्यग्रं). M4 तथागमनसंकल्प. —D3.7 om. 23$^{d}$. —$^{d}$) Ś1

अहल्यादर्शनं चैव गौतमेन समागमम् ।
महाधनुषि जिज्ञासां कर्तुमागमनं तथा ॥ २४

एतत्सर्वं महातेजा जनकाय महात्मने ।
निवेद्य विररामाथ विश्वामित्रो महामुनिः ॥ २५

G 1 51 29
B 1 50 25
L 1 46 22

इति श्रीरामायणे बालकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

$N_3$ V B $D_{1,2,10,13}$ $M_4$ द्वि($V_{1,2}$ $B_1$ $M_4$ वै)शालस्य (for विशालायाम्) $D_{13}$ स (sic) (for च)

24 [b]) $G_1$ गौतमे तु (for गौतमेन) —[c]) $G_{2,3}$ $M_1$ आरोपण $M_4$ चा°, Ct as in text (for आगमनं) $T_3$ तदा (for तथा) —For 24 Ś1 $D_{1-3,5,7,11}$ (I 2 only for $24^{cd}$) 12 subst

1042* गौतमाश्रमकार्यं च गौतमस्य च दर्शनम् ।
महाधनुषि जिज्ञासा कार्यं चैषा महात्मन ॥

[$D_{13}$ om (hapl) l 1 —(l 1) $D_{13}$ गौतमस्य (through eye wandering for गौतमा) —$D_3$ om l 2 —(l 2) $D_{1,2}$ कार्यं चैव महात्मनो $D_{11}$ कर्तव्या च महायशा (for the post half) ]

while $N_3$ V B $D_{10}$ 11 (l 1 only for $24^{ab}$) 14 subst

1043* गौतमस्य च शापान्तमहल्यायाश्च दर्शनम् ।
रामस्य धनुषश्चैव जिज्ञासार्थमुपागमम् ।

[$D_{13}$ om (hapl) l 1 —(l 1) $B_1$ transp the two halves $V_1$ $B_{2,4}$ गोतमस्य $N_3$ $B_3$ $D_{10}$ (श्र)पि (for first च) $D_{14}$ (with hiatus) शापाच (for शापान्तम्) $D_{10}$ अहिल्यायाश्च —(l 2) $V_3$ रामश्च $V_{1,3}$ उपागमद् ($V_3$ °न) $B_{2-4}$ ($B_4$ m also) उपागत ]

25 [a]) Ñ3 V B $D_{10,13}$ इति, Ck as in text (for एतत्) $D_5$ सर्वे, Ck as in text (for सर्वं) —[b]) $V_3$ न्यवेदयत्, $B_3$ (m also as in text) °मुने (for महात्मने) Ś1 $D_{1,3,4,7,11,12}$ कौशिको जनकाय वै —[c]) Ś1 $D_{2,3,5,7,12}$ विररामाशु, $V_3$ वीर रामार्थं (sic) Ctp विरराम तदा (hypermetric) (for विररामाथ) —[d]) $D_{11}$ महातपा —After 25 Ś1 $D_{1,3,5,7,11,12}$ ins

1044* मुनिमध्ये स्थित प्राज्ञो वसूनामिव पावक ।
[$D_{1,3,7,11}$ यज्ञे (for प्राज्ञो) ]

Colophon $D_{1,2,5,7,11,12}$ om (cont the Sarga) —*Kanda name* Ś1 $N_2$ $V_1$ $D_4$ om $V_{2-4}$ B $D_{10}$ आदि° —After Kanda name $B_4$ ins बालचरिते —*Sarga name* Ñ3 V B $D_{3,10}$ जनकदर्शन($B_2$ °कसमागम $D_3$ °संवादो) —*Sarga no* (figures words or both) $V_{1,4}$ $B_{1,4}$ om Ś1 (m) $V_2$ Dt $D_{4,6,14}$ T G $M_{1,3}$ 50 Ñ3 $B_{2,3}$ $D_{10}$ 51 $V_3$ $D_5$ 53 $D_{13}$ इत्यार्षे—यथ—काडे—दर्शनसर्गो 51 —After colophon $G_{1,2,4}$ $M_3$ conclude with श्रीरामाय नम $G_3$ श्रीमते रामानुजाय नम

## ५०

G. I. 52 1 B. I. 51 1 L. I. 47 1

तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।
हृष्टरोमा महातेजाः शतानन्दो महातपाः ॥ १

गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।
रामसंदर्शनादेव परं विस्मयमागतः ॥ २

स तौ निषण्णौ संप्रेक्ष्य सुखासीनौ नृपात्मजौ ।
शतानन्दो मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत् ॥ ३

अपि ते मुनिशार्दूल मम माता यशस्विनी ।
दर्शिता राजपुत्राय तपो दीर्घमुपागता ॥ ४

अपि रामे महातेजो मम माता यशस्विनी ।
वन्यैरुपाहरत्पूजां पूजार्हे सर्वदेहिनाम् ॥ ५

अपि रामाय कथितं यथावृत्तं पुरातनम् ।
मम मातुर्महातेजो दैवेन दुरनुष्ठितम् ॥ ६

अपि कौशिक भद्रं ते गुरुणा मम संगता ।
माता मम मुनिश्रेष्ठ रामसंदर्शनादितः ॥ ७

अपि मे गुरुणा रामः पूजितः कुशिकात्मज ।
इहागतो महातेजाः पूजां प्राप्य महात्मनः ॥ ८

## 50

☞ Ñ1 missing Sarga 50 (cf v l 1338) D1 3 5 7 11 12 continue the previous Sarga.

1 c) D1 2 हृष्टचेता Ñ2 V B D10 12 भूत्वं भूत्वा (for महातेजा) —d) B1 महामुनि, Ś1 (after corr su as in text) D1–3 5 7 11 12 क्षणेन समपद्यत

2 a) V1 B1 D1 गोतमस्य, D2 गौतमेन (sic) V1 (after corr marg as in text) T1 श्रेष्ठस्, T2 ज्येष्ठे (sic) (for ज्येष्ठस्) —T3 om (hapl ?) Ñ2 reads in marg 2b–3c —b) V1 2 4 B2 D1 M2 [उ]द्योतितप्रभ, B4 D12 13 द्योतित प्रभु —c) G1 रामस्य (for रामस) Ś1 Ñ2 V B D1–3 5 7 10–13 रामस(D2 3 7 °स्य)दर्शनं प्राप्य(D3 7 °प्त) —d) M4 आययौ (for आगत) Ñ2 V B D10 13 विस्मयं परमं ययौ, Cv r k as in text

3 T3 om Ñ2 reads in marg up to 3c (for both cf v l 2) —a) D1 D3 5 दृष्ट्वा, G1 2 M3 (after corr sec m as in text) ततो, Cm as in text (for स तौ) G2 निषण्ण Ś1 D2 3 11 12 स (Ś1 सु, D1 स)निषण्णौ तु तौ (D11 ततो) दृष्ट्वा, Ñ2 V B D3 7 10 13 स (Ñ2 V1 2 4 B2 4 D10 स)निषण्णावुभौ दृष्ट्वा D5 स सनिषण्णौ तौ दृष्ट्वा, M4 स निषण्णस्ततो दृष्ट्वा —bc) D1 सुखासीनौ D2 3 transp सुखासीनौ and शतानन्दो Ñ2 V B D10 13 सदृशौ रामलक्ष्मणौ (for b) Ś1 V1 B1 D1 3 5 7 11 12 मुनिश्रेष्ठो, M4 द्विजश्रेष्ठ —d) Ś1 Ñ2 V B D10 12 समभाषत, D1 3 5 7 11 12 उवाच ह (for अथाब्रवीत्)

4 a) G2 M1 सु, Cm g t as in text (for ते) Ñ2 V B D10 13 अपि (V2 °पि) त्वया मुनिश्रेष्ठ M4 अपि त्वया महाभाग, Ck as in text —b) Ś1 Ñ2 V B2–4 D1–3 5 7 10–13 तपस्विनी —cd) Cg as in text (for c) M4 दीर्घं तप (by transp) Ñ2 V B D10 13 दर्शिता राजपुत्रस्य रामस्यास्य(D10 °क्ष्य, D13 °स्य च) महात्मन

5 D6 13 om (hapl) 5 Ś1 D5 om 5ab —c) D1 D4 (before corr as in text) 4 5 T G1 °तेजा, G1–3 M1 °भागा, M4 °भागे (for महातेजो) —Ś1 reads 5c–6 in marg —d) Ś1 रघुनंदन (for सर्वदेहिनाम्) —For 5, Ñ2 V B D10 13 subst

1045* अपि रामाय मे माता पूजार्हाय महात्मने ।
पूजां कृतवती सम्यगहल्या भृशदु खिता ॥

[(1 1) B3 4 D10 13 महामुने —D13 om (hapl) from 1 2 up to 6d ]

On the other hand D1–3 7 11 subst

1046* अपि रामे महातेजा मम माता सह त्वया ।
वन्यैर्मूलफलैर्नित्यमर्चितोऽर्घ्यप्रतिग्रहे ॥

[(1 1) D11 महात्मने (for सह त्वया) —(1 2) D3 मूलै, D11 भूमि (for मूल) D3 अर्चितो (for अर्चितो) D11 हि प्रति° (for र्घ्यप्रतिग्रहे) ]

6 D12 om 6ab, Ś1 reads 6 in marg (for both cf v l 5) —b) B3 reads यथा in marg D1 D3 4 यद्वृत्तं(D1 यद्) (for यथावृत्त) —c) D2 3 7 अपि (for मम) Ñ2 V B1–3 D10 13 M4 °बुद्धे, B4 °भाग, D1–3 7 °वीर्य, T3 °तेजा (for महातेजो) —d) Ñ2 V1 3 4 B4 D2 3 7 13 14 T Cm g दैवेन, Ck t दै° (as in text) V1 B1 2 D1–3 7 °विहित, B3 दु खचेष्टित, D4 M3 Cm यद्दनु°, Cg k t दुरनुष्ठित (as in text) T3 दैवेय च(च य)दनुष्ठित —For 6, D5 11 13 subst, Ś1 D1–3 7 ins after 6

1047* अपि मत्ता विसु(Ś1 °सु)क्ता मे तस्माच्छापात्सुदारुणात् ।

7 ab) Ś1 अपि (for अपि) Ś1 (after corr sup lin as in text) D6 12 13 चापि (for मम) Ñ2 V B D10 13 M4 अपि कौशिक माता मे संगता गु(V4 °त त)रुणा गुन (V4 मम, B4 सह) —c) D1 D3 4 6 13 T1 2 M3 मम माता (by transp) Ś1 D1–3 5 7 11 13 माता मुनिगणश्रेष्ठ, Ñ2 V B D10 13 M4 शापाद्विमुक्ता(?) मिता (M4 माता) मे —d) Ś1 D6 13 ऋजु, M3 पर, Ck as in text (for इत) Ñ2 V B D10 11 13 T3 M4 रामदर्शननिर्मला (T3 °नादित), Cg t as in text

8 Ñ2 V B D10 11 13 M4 transp 8 and 9 —c) Ś1 Ñ2 V B D1 3 4 5 7 10–13 बहुन्, Ck t as in text (for

अपि शान्तेन मनसा गुरुर्मे कुशिकात्मज ।
इहागतेन रामेण प्रयतेनाभिवादितः ॥ ९

तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः ।
प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् ॥ १०

नातिक्रान्तं मुनिश्रेष्ठ यत्कर्तव्यं कृतं मया ।
संगता मुनिना पत्नी भार्गवेणेव रेणुका ॥ ११

तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः ।
शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२

स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ।
विश्वामित्रं पुरस्कृत्य महर्षिमपराजितम् ॥ १३

अचिन्त्यकर्मा तपसा ब्रह्मर्षिरमितप्रभः ।
विश्वामित्रो महातेजा वेत्स्येनं परमां गतिम् ॥ १४

नास्ति धन्यतरो राम त्वत्तोऽन्यो भुवि कश्चन ।
गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ॥ १५

श्रूयतां चाभिधास्यामि कौशिकस्य महात्मनः ।
यथाबलं यथावृत्तं तन्मे निगदतः शृणु ॥ १६

G 1 52 16
B 1 51 16
L 1 47 16

राम ) —[b]) Ś1 Ñ2 V B D1-3 8 1 10 13 पूजितोऽसि यथाविध (Ś1 D5 12 °ईंग, D8 °धड ) —[c]) D1-3 7 13 °भाग, D11 महा * * (for महातेजा ) —[d]) Ś1 D5 12 कृत्वा ( for प्राप्य ) D7 यथाविधि ( for महात्मन )

9 Ñ2 V B D10 11 13 M4 transp 8 and 9 Ś1 D5 8 12 om (hapl ?) 9 —[a]) Ñ2 V B D10 11 13 M4 प्रीतेन ( for शान्तेन ) —D7 om 9[cd] —[cd]) Dt D8 3 पूजितेन, T2 Ck प्रयतेन, Cg as in text ( for प्रयतेन ) Ñ2 V B D10 11 13 M4 पू( M4 ए )ता दृष्टेन तपसा मातर मेऽभ्यनन्दत ( Ñ2 B2 °यत ), D1 3 इहागतो महातेजा पूजां कृत्वा महात्मन (cf 8[cd])

10 Ś1 M3 read 10–11 in marg —[a]) D13 त(sic) (for तत् ) —[b]) Ñ2 V B D1 3 7 10 11 महायशा, D13 महातपा D5 12 शतानन्दस्य धीमत —[c]) V3 इत्युवाच —[d]) D8 sup lin G1 3 वाक्यज्ञ, M3 damaged वा ( for वाक्यज्ञो ) D8 -विद्, D12 G1 2 M4 -कोविद ( for -कोविदम् ) Ñ2 V B( B3 inf lin also ) D10 11 13 वाक्य वाक्यविशारद ( Ñ2 B2 D10 °द वर )

11 Ś1 M3 read 11 in marg (cf v l 10) —[a]) D6 13 नातिक्रमो Ñ2 V B D10 13 इद मह्यं ( for मुनिश्रेष्ठ ) —[b]) Ñ2 V B1 3 4 D10 13 यत्कार्यं तत्, B2 कार्यं यत्तत्, D1-3 5 7 11 12 M4 सर्वमेतत्, Cg k t as in text ( for यत्कर्तव्य ) D1-3 6 7 11 13 M4 transp कृत and मया —[c]) Ñ2 V B D10 13 गुरुणा ( for मुनिना ) —[d]) V3 B3 4 D6 10 [ए]व ( for [इ]व ) D1-3 5 7 11 12 रेणुकेव महात्मना

12 [b]) D6 14 T G M3 Cm भाषित ( for धीमत ) —[c]) Ñ2 V1-3 B D10 13 M3 °नन्दस्ततो राम, V4 °स्ततो वाक्यं —[d]) Ñ2 V1 3 B D2 7 10 12 M4 (all except D3 7 with hiatus) इदं ( for राम ) V4 वचन मिदमब्रवीत्

13 [a]) Ñ2 V B D10 11 13 M4 रघुश्रेष्ठ, D7 मुनिश्रेष्ठ —[b]) V1 दृष्ट्या Ś1 D5 11 12 दृष्टोऽसि ( D11 °*) B1 प्राप्तोऽसि (sic) Ñ2 V B D10 13 मे प्रभो, M4 च प्रभो ( for राघव ) —[d]) D8 महर्षिम् ( for महर्षिम् ) Cm k अपराजित (as in text) Ś1 D2 3 4 7 12 ह या( D2.8 3 स्व( )श्रममुपागत D1 स्वाश्रम समुपागत, D11 (with hiatus) इम यज्ञमुपागत —For 13[cd], Ñ2 V B D10 13 M4 subst

1048* विश्वामित्रेण सहित इम यज्ञं महात्मन ।

[ V3 4 इह ( for इम ) D13 यज्ञार्थं महात्मना ( for the post half ) ]

14 [a]) G1 तपस, Cm g as in text Ś1 Ñ2 V B D1 3 6 7 10-13 अचिंत्यो ह्यय( D13 ह्यसि ) धर्मात्मा, D4 (before corr as in text) अचिंत्यकर्मतपसा, M4 अचिंत्यधर्मकर्माय —[b]) Ś1 D1-3 5 7 11 13 G1 3 M3 महर्षिर्, Cm g ब्रह्मर्षिर् (as in text) D1 9 T3 G1 3 M अतुल ( for अमित ) Ñ2 V B1 2 4 D10 शार्ङ्गीरमित( B4 °मह )द्युति, B3 D13 रामेव( D13 °भ न्व )ममितद्युति —[c]) G2 M3 महाभाग —[d]) Dt D1 6 8 T3 वेत्सि; Cg as in text ( for वेत्सि ) Ct परमां गतिं (as in text) Ś1 D1 2 4 7 8 12 तवाय परमा गति, Ñ2 V B1 3 4 D10 13 M4 यस्य( V1 °ज्ञ ) ते परमो गुरु, B2 ऋषीणां परमो गुरु, D11 तवाय परमो गुरु

15 [a]) V3 धर्मरतो ( for धन्यतरो ) —[b]) Ś1 D5 12 M4 त्वयेह, Ñ2 V B D10 11 13 त्वदन्यो, D1 3 7 त्वत्तेह ( for त्वत्तोऽन्यो ) Ś1 D5 12 यस्य ते, D1 पाश्वने ( gloss एतस्माद्विश्वामित्रादन्य कोपि धन्यतरो नास्ति यस्मात्त्वया पावनात् अधीयत त्वा अवश्याम अध्यापयितु विश्वामित्र एवार्हति नान्य ), D2 3 7 इहेव ( for कश्चन ) —[c]) D8 कौशिक° D1 2 8 12 तु ( for ते ) D11 यस्याचे हितकामोऽथ —[d]) D11 तेन ( for येन ) Dt M3 महातप —For 15[cd], Ñ2 V B D10 13 M4 subst

1049* गुणेन तेजसा चापि धर्मेण च पराक्रमै ।
यस्य ते हितकामोऽय विश्वामित्रस्तपोनिधि ।

[All except B3 om 1 r —(l 2) B1 om ते (submetric) ]

16 [a]) V1 damaged Dt श्रूयंतां Ś1 D1 3 6 11 12 अभि°, Ñ2 V2-4 B D10 13 च पुरा( B4 यथा )वृत्त, D7 अप° (sic), M4 तमभिधास्यामि —[c]) D11 °चामी M3 °कुल ( for यथाबलं ) Dt D1 8 Ct °तत्त्वं, D7 °वित्त (sic) ( for यथावृत्त ) Cv r as in text Cm g k t no समस्तपद्s ( for [c]) —For 16[cd] Ñ2 V B D10 13 subst while D11 ins. after 16[ab]

1050* यद्वीर्यो यत्प्रभावोऽय यद्योगश्च महायशा ।

G 1 52 17
B 1 51 17
L 1 47 17

राजाभूदेष धर्मात्मा दीर्घकालमरिंदमः ।
धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः ॥ १७
प्रजापतिसुतस्त्वासीत्कुशो नाम महीपतिः ।
कुशस्य पुत्रो बलवान्कुशनाभः सुधार्मिकः ॥ १८
कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः ।
गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः ॥ १९
विश्वामित्रो महातेजाः पालयामास मेदिनीम् ।
बहुवर्षसहस्राणि राजा राज्यमकारयत् ॥ २०
कदाचित्तु महातेजा योजयित्वा वरूथिनीम् ।
अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१
नगराणि च राष्ट्राणि सरितश्च तथा गिरीन् ।
आश्रमान्क्रमशो राजा विचरन्नाजगाम ह ॥ २२
वसिष्ठस्याश्रमपदं नानापुष्पफलद्रुमम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३

---

[ D3 दयोग्यद्, D13 वद्दिवद् (for दयोग्द्) V4 महातपा (for महायशा) ]

17 [a]) D1 D4 5 [आ]सीद्; Cl as in text (for [अ]भूद्) —[b]) V B1 3 4 D4 5 7 9 M1 अरिंदम —B3 repeats (m) 17[cd] after 20 —[c]) G1 3 कृतज्ञ ; G2 M1 सर्वज्ञ (for धर्मज्ञ) Ś1 D1 3 5 7 12 13 M4 च वदान्यश्च; Ñ2 V2-4 B1 3 (B3 both times) D10 12 च क्रियावांश्, B1 D9 च कृतज्ञश्, T2 3 °वीर्यश्च (for कृतविद्यश्) V1 धर्मपत्र (sic) क्रियावांश्च —[d]) D1-3 5 12 प्रजावत्सल (for प्रजानां) Ñ2 V B (B3 both times) D10 15 पालने (for च हिते) D12 सर्वभूतहिते रत

18 [a]) Ś1 Ñ2 V B D1-3 5 7 10-13 M4 पितामह, Cg k t as in text (for प्रजापति) Ñ2 V1 2 B3 D8-4 7 12 13 T3 G1 2 M3 च (for तु) —[b]) Ś1 Ñ2 V1 (before corr as in text) 2 4 B1 3 D1 3 5 7 10-13 महातपा (D3 [before corr] °त्मन), B3 4 महायशा (for मही°) —[c]) V1 मन्व न (for बलवान्) —[d]) D13 om (hapl) from सु up to भ in 19[a] D12 तु (for सु)

19 D12 om up to भ (cf v l 18) T1 reads 19-20 in marg —[a]) Ñ2 V1 2 P3 D1 3 7 10 13 T3 G1 3 M1 चासीद्, D9 तस्माद्, D13 वामी (sic) M3 श्रीमान् (for त्वासीद्) —[b]) M1 3 (sup lin sec m before corr as in text) गाधिद् D1 [अ]भि, D2 3 5 7 11 13 [ए]व (for [ए]व) —[c]) Ñ2 V B D10 12 तस्य, D11 गाधि (for गाधे) —Ñ2 om (hapl) from तेजा up to महा in [d] —B1 om (hapl) 19[d] —[d]) D1-3 7 11 महायशा, D3 12 महामना

20 T1 reads 20 in marg (cf v l 19) —[ab]) M4 °मित्रस्तु धर्मात्मा T3 धर्मेण स महाबाहु (for [a]) Cg पालयामास (as in text) Ś1 Ñ2 V B D1 3 5 7 11 13 विश्वामित्रस्तु (D12 °श्र) धर्मात्मा पालयन्मेदिनी (Ś1 °न्पृथिवी) मिमा —[c]) Cv r बहुवर्ष (as in text) Ś1 D1 3 5 7 11 13 बहून्वर्षगणान्राम, Ñ2 V B D10 13 वर्षायुतान्यनेकानि —After 20[a] M3 (inf lin sec m) ins

1051* चतुरङ्गबलैर्युत ।
नीतिशास्त्रविशेषज्ञ ब्रह्मण्य सत्यसंगर ।
निग्रहानुग्रहपरो

—After 20 B3 (marg) repeats 17[cd] and then ins

1052* पूर्वं पालयतो राम राज्ञस्तस्य महात्मन ।
अष्टौ तस्जज्ञिरे पुत्रा ख्यातवीर्यपराक्रमा ।
तासां ज्येष्ठप्रथितान्प्रतिष्ठाप्यास्तु वीर्यवान् ।
हृष्टा यज्ञनाते पुण्यैस्तपोवनमुपागत ।

21 [a]) Ś1 Ñ2 V1-3 B D3 10 13 स, D3 5 7 11 12 सु (for तु) M4 महासेनां —[b]) Ñ2 V1 2 4 B D1 3 7 9 11 13-15 T1 2 G1 M4 Cvp वरूथिनीं (D3 gloss करितुरगरथसैन्यभारगार), Cg k t as in text (for वरूथिनीम्) V विश्वामित्रो महामुनि —M3 reads 21[cd] inf lin sec m —[c]) G1 2 M3 अक्षौहिण्या (for °हिणी) —[d]) Ś1 D3 पर्यगच्छद्वसुंधरां, D1-3 7 11 पर्यटश्च वसुधरां

22 [a]) D11 T1 G M1 स (for च) —[b]) Dt D4 5 महा (for सथा) —For 22[ab], Ś1 Ñ2 V B D1 3 5 7 10-13 M4 subst

1053* सरित पर्वताश्चैव वनानि नगराणि च ।

[ V4 सर्वतश्च (for पर्वताश्च) D4 5 9 काननानि वनानि च M वनान्युपवनानि च (for the post half) ]

—D11 om 22[c]-23[b] —[c]) Ś1 Ñ2 V1-3 B D1-3 5 7 10 12 M4 विचरन्, V4 विक्रमन्, D13 विचन्न (sic) (for आश्रमान्) M4 विचरन् (for क्रमशो) T1 2 M3-4 राम, G1 M1 राजन् (for राजा) —[d]) Ś1 D1 3 4 7 9 12 त (D13 *) दृत्वाच्छन्महायशा, Ñ2 V B D10 13 (all with hiatus) आजगाम महायशा (B3 °बल) M3 क्रमशस्त्वाजगाम ह M4 राजमानो महायशा

23 V3 D11 om 23[ab] (for D11 cf v l 22) —[b]) Dt D4 5 8 T G1 -लता (for फल) V1 नानाद्रुमलतायुत, B1 यज्ञस्थानमनुत्तमं, D13 T1 2 G1 नानाद्रुमलताकुलं —[c]) V1 मृगशता°, V2 द्रुमलता°, V3 -मृगगणै°, B1 -मृगसमा° (for -मृगगणाकीर्णं) —[d]) Ś1 D1-3 5 7 11 13 देवर्षिगण (for सिद्धचारण) Ś1 D5 13 -पूजित —After 23 Ś1 D1 3 5 7 11 13 M4 ins

देवदानवगन्धर्वैः किंनरैरुपशोभितम् ।
प्रशान्तहरिणाकीर्णं द्विजसंघनिषेवितम् ॥ २४
ब्रह्मर्षिगणसंकीर्णं देवर्षिगणसेवितम् ।
तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ॥ २५
सततं संकुलं श्रीमद्ब्रह्मकल्पैर्महात्मभिः ।
अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ॥ २६
फलमूलाशनैर्दान्तैर्जितरोषैर्जितेन्द्रियैः ।
ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः ॥ २७
वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम् ।
ददर्श जयतां श्रेष्ठो विश्वामित्रो महाबलः ॥ २८

इति श्रीरामायणे बालकाण्डे पञ्चाशः सर्गः ॥५०॥

G 1 52 27
B 1 51 28
L 1 47 27

1054* बहुपुष्पफलं रम्यं यक्षराक्षसवर्जितम् ।

[D11 महर्षिगणसेवित (for the post half) ]

24 N2 B1 om (hapl ) 24–$25^{b}$ V B3-4 D12.13 om (hapl ) 24 M3 reads 24–$25^{b}$ inf lin sec m G1.2 read $24^{ab}$ after $25^{ab}$ —$^{a}$) Ś1 D1.3.5.7.8.11.12 गन्धर्वै (for गन्धर्वै ) —$^{b}$) D1 उपसेवित (for उपशोभितम्) —$^{cd}$) D4 विहग (for संघ ) Ś1 D1.3.5.7.11.12 नानाविहग( D1.2 °हंग, D6 °गहं[ metathesis ] )नादित (for $^{d}$) G2 M1 प्रकीर्णद्विजसंघातैर्हरिणैश्चनिषेवित

25 Ś1 Ñ2 B1 D1.3.5.7.11.12 om (hapl ) while M3 reads $25^{ab}$ inf lin sec m (for Ñ2 B1 M3 cf v 1 24) —$^{a}$) B3 D10.13 देवर्षि (for ब्रह्मर्षि ) V1 B2 संपूर्ण V2 महाश्रममिदं तत्तु B4 नानामुनिसमाकीर्णं —$^{b}$) V3 B3.4 D10.13 ब्रह्मर्षि (for देवर्षि ) V B3-4 D12 पूजित (for सेवितम्) —After $25^{ab}$ G1.2 read $24^{ab}$ —$^{c}$) V1 D12 परम्रि (for चरण ) G1.2 पुराणैस्तपसा सिद्धैर् —$^{d}$) D12 महर्षिभि (for महात्मभि )

26 D1.3.7 T1 om (hapl.) $26^{ab}$ —$^{a}$) N2 B2 D10 सतत V2 सगत, V3 कुशल, Ct as in text (for संकुल) V3 राम, D10-13 श्रीमान् (for श्रीमद् ) —$^{b}$) G2 M1 महापुण्यैर्, Ct as in text (for °कल्पैर्) Ñ2 V3.4 B1.2 D12 महाव्रतै, V1 damaged V2 महर्षिभि, B3 महारथै (for महात्मभि ) —$^{c}$) M5 अभक्षैर्, Cm g cas in text (for अब्भक्षैर्) —$^{d}$) D2 पर्णे (sic) G1 चीर्ण G2 वीर्य (for शीर्ण ) Ś1 B4 D1.3.5.7.11.12 M3 पर्णाशिभिस् D4.12 यदा (for तथा)

27 D7 om $27^{ab}$ —$^{a}$) N2 V2.4 B D10.12 M4 फलमूलाशिभिर् D8 फलमूलादिभिर्वीतैर् —$^{b}$) Ñ2 (marg ) V1.3.4 B D11.13 क्रोधैर्, Dt D6.8 द्वेषैर् (for रोषैर्) —V1 damaged from षै in $^{b}$ up to सम in 1055* —After $27^{ab}$, Ś1 N2 V B D1.3.4.10.13 ins. while M4 ins, after 27

1055* समक्षालैरश्मकुट्टैर्दन्तोलूखलिभिस्तथा ।

[ V1 damaged up to सम B4 प्रक्षालैर् D5 सुप्रक्षालैर् (hypermetric) (for समक्षालैर्) V2 समुज्जालैर् श्मकुट्टैर् V4 संप्रक्षालैरश्मकुट्टैर् M4 समक्षालश्मकुट्टैश्च (for the prior half) M4 [ उ ]लूखलैस् ( for °खलिभिस् ) D2 दन्तोलूखिभिस्तथा ( sic ) (for the post half ) ]

—$^{c}$) Ś1 D5.11.12 °खल्यैर्, B D3.10 वालि°, Dt D3.7 वालिखिल्याद्यैर् (for वालखिल्यैश्च ) —$^{d}$) V1 (with hiatus) जपहोम, D2 जपाहार (sic ?) (for जपहोम ) —After 27 Ś1 (marg ) Dt D4.5.8.14 T G2.4 M1.2 Cm ins

1056* अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम् ।

[Cm वैखानसैश् ]

28 $^{b}$) Ś1 Ñ2 V2-4 B D1-3.5.7.10-13 M4 ब्रह्मस्थानमनुत्तमं( M4 °मिवाकुले ) V1 damaged —$^{c}$) Ś1 N2 V B D1.3.5.7.10-13 अपश्यत (for ददर्श ) Ś1 D1.3.5.7.12.13 M4 जपतां, Ñ2 V1-3 B2 D10.13 यजतां V4 B3 जगतां, B1 missing D4 तपतां, D11 यगतां (sic) Cm t as in text (for जयतां ) B1 missing D8 श्रेष्ठ —$^{d}$) Ñ2 V B D10 महामना M4 महातपा —After 28 Ś1 D5.11-13 ins

1057* बालोद्यत्तपनवाहसमं नियम्य
वल्गावशेन तुरगं च शशाङ्कशुभ्रम् ।
दीव्यत्प्रभानिकरकुण्डललोलमान
कर्णस्तुरंगमवरादवरुरोह राजा ।

[ (l 1) D13 निभं (for समं) —(l 2) D12 वल्गावशेन (sic) (for वल्गावशेन) —(l 3) D5 दीप्यद् D11.12 दीप्य D11 दीव्यत्प्रभावमकर (hypermetric) ]

Colophon *Kanda name* Ś1 Ñ2 D1.5.12 om V B3 D10 आदि°, D3 अयोध्या° —After Kanda name B4 ins बालचरिते —*Sarga name* Ś1 D3.5.7.8.11 वसिष्ठाश्रमदर्शनं( D1.7.8 °नो D6 °वर्णनो ) N2 V2-4 B D10 शतानन्दवाक्य V1 शतानन्दवाक्ये वसिष्ठाश्रमदर्शनं D1 वसिष्ठाश्रमपदो, D3 वसिष्ठस्याश्रमदर्शन D12 वसिष्ठाश्रमो —*Sarga no* (figures words or both) Ś1 V1.4 B1.4 D5.11 om, N2 B2.3 D10 52 V2 D3 54 V3 Dt D4.6.8.14 S (except M4) 51 D1 40 D2 38 D7 39 D13 44 D12 रामा—बाल—वसिष्ठा—वर्णने 52 —After colophon T1 concludes with श्रीरामचन्द्राय नम G1.2.4 M3 श्रीरामाय नमः, G3 श्रीमते रामानुजाय नम

कच्चिद्बले च कोशे च मित्रेषु च परंतप ।
कुशलं ते नरव्याघ्र पुत्रपौत्रे तथानघ ॥ ९
सर्वत्र कुशलं राजा वसिष्ठं प्रत्युदाहरत् ।
विश्वामित्रो महातेजा वसिष्ठं विनयान्वितः ॥ १०
कृत्वोभौ सुचिरं कालं धर्मिष्ठौ ताः कथाः शुभाः ।
मुदा परमया युक्तौ प्रीयेतां तौ परस्परम् ॥ ११
ततो वसिष्ठो भगवान्कथान्ते रघुनन्दन ।
विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥ १२
आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल ।
तव चैवाप्रमेयस्य यथार्हं संप्रतीच्छ मे ॥ १३
सत्क्रियां तु भवानेतां प्रतीच्छतु मयोद्यताम् ।
राजंस्त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥ १४
एवमुक्तो वसिष्ठेन विश्वामित्रो महामतिः ।
कृतमित्यब्रवीद्राजा पूजावाक्येन मे त्वया ॥ १५
फलमूलेन भगवन्विद्यते यत्तवाश्रमे ।
पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६
सर्वथा च महाप्राज्ञ पूजार्हेण सुपूजितः ।
गमिष्यामि नमस्तेऽस्तु मैत्रेणेक्षस्व चक्षुषा ॥ १७

G 1 53 17
B 1 52 17
L 1 48 18

---

9 a) Ś1 D5 12 13 कच्चित्ते कुशलं कोशे, Dt D6 8 14 T1 2 G2 M2 3 Cg t कच्चिद्बलेषु कोशेषु —b) D2 12 13 परतप, D3 पर ** —c) B3 D14 नृपव्याघ्र, D11 नरव्याघ्रु (sic) (for नरव्याघ्र) —d) Ś1 V1 2 B1 D1 3 5 7 11 13 पौत्रेषु चा° (D12 वा), D10 पौत्रैश्च°, D14 T1 2 G2 M3 पौत्र तथानघ, T1 पौत्रेषु सानद (for पौत्रे तथानघ)

10 a) D11 सर्वत (for सर्वत्र) Ś1 D5 12 राज्ये (for राजा) —b) Ś1 D5 13 भगव, D1 3 7 तमथ, M4 सत्यम (for वसिष्ठं) Ś1 Ñ2 V B D1 3 5 7 11 13 प्रत्युवाच ह (for प्रत्युदाहरत्) —d) Ñ2 V B D10 13 तमथो (V3 °सौ), D11 तमृषिं Cm g as in text (for वसिष्ठं) Dt D6 8 G4 M4 Cm विनयान्वितं, D13 विनयान्वित Ck as in text (for d)

11 a) Ś1 Dt D5 8 11 13 तौ, Ñ2 V3 4 B D1 3 5 7 M4 तु, V1 2 D3 च, D10 om (submetric) (for [च]भौ) D10 12 सुचिर (for सुचिरं) V1 सुचि ** (lacuna) —b) D6 14 T1 2 G1 3 4 M3 4 तौ, T3 ता (sic) (for ताः) D8 कथा (for कथाः) Cv r g t ता कथा (as in text) Dt D6 8 + M2 4 तदा, D4 T3 G1–3 M1 तथा (for शुभाः) Ś1 D1 3 5 7 12 बहुवृत्तान्त (Ś1 °तु, D3 °च)स (Ś1 D3 सत्) कथा Ñ2 V B D10 13 धर्मिष्ठा ता कथा तदा (B4 °था), D11 कथा बहुविधा तदा —c) D12 युक्तात्, T3 युक्त (sic) (for युक्तौ) —d) Cm g k t प्रीयेता (as in text) Ś1 Ñ2 V B D1 3 5 7 10–13 अभिन (Ś1 B4 °च, D13 °नि [sic])य (for प्रीयेता तौ)

12 a) M4 तथा (for ततो) —b) Ś1 Ñ2 V (V1 lacuna from व up to मित्र in c) B D1–3 5 7 10–13 M4 मुनिसत्तम (D2 3 °म, M4 °म)

13 b) Ñ2 B1 4 D1 13 °बल, V4 °बल (for महाबल) —d) Cv r m g t सम्प्रतीच्छ (as in text) V1 lacuna after the first syllable म up to प्रतीच्छतु in 14b Ś1 Ñ2 V2–4 B D1–3 5 7 10–13 प्रतिगृह्यताम् (for संप्रतीच्छ मे)

14 V1 lacuna up to प्रतीच्छतु (cf v l 13) —a) D4 सक्रियाः (sic), D5 सत्कृता (for सत्क्रिया) Dt D1 3 6 8 11 13 T3 M2 हि (for तु) Ś1 D5 12 13 तानि, D1 3 7 तावद्, D4 6 T3 G2 M2 3 त्वतः (for एतां) Ñ2 V2 4 B D10 प्रतिगृह्णातु, G1 3 महतीं चैतां, M4 निधिवत्तात (for तु भवानेतां) —b) Ñ2 V3 4 B1 3 D10 भवानिह, D3 प्रगच्छतु, G1 3 प्रतीच्छ त्वं, M4 प्रतीच्छस्त्व, Ck as in text (for प्रतीच्छतु) Cm g [उ]द्यता (as in text) V1 D13 ममोद्यता, Dt D6–8 मया कृता, D4 M4 मयोदिता (for मयोद्यताम्) B4 भवानिहमिहोद्यता (sic) D3 प्रतीच्छतुमे बोधता (sic) —c) D14 T1 2 G1 राजा (for राजन्) B3 D3 तम्, D12 स्वम् (for त्वम्) D3 6 7 10 14 G2 अतिथि (for अतिथि) V2 4 B1 D12 M1 श्रेष्ठ (for श्रेष्ठः) D11 राज्य चमतिथि श्रेष्ठ (corrupt) —d) D13 पूजनाय (for पूजनीय)

15 a) D3 उक्त्वा D11 उक्ते (for उक्तो) —b) V1 lacuna for मित्रो महामति Ś1 V2–4 B D1 3 7 10–13 M4 महर्षि (D13 °हा)पति, Dt D5 6 8 T1 °मुनि, G3 M1 °तपा, Cv as in text Cr °बल (for महामति) —c) V4 B1 कृतकृत्यो ब्रवीद् T3 वाक्य (for राजा) Cv r as in text (for c) —d) D11 om Cm g प्रिय, Ck t पूजा (as in text) Ś1 D5 12 नाथेन, Ñ2 V3 4 B D1 3 7 10 11 13 चानेन, V1 वन्येन, V2 [अ]निल च (for वाक्येन) M4 वाक्येनानेन Ś1 Ñ2 V1 3 4 B D1 3 5 7 10–13 मे कृता (Dt °ता) V2 सत्कृता (for मे त्वया)

16 Before 16a D13 wrongly repeats 15a —a) Ś1 कृत (marg also as in text) मूलेन, D3 फलमूले हि, D11 फलमूले (submetric) (for फलमूलेन) —b) D3 यत्र च, D14 यस्तव, T3 यत्तद् (for यत्तव) Ñ2 V B D10 M4 तव विद्यते प्रभो (M4 वने) —c) Ś1 D5 12 पाद्ये चाचमनीये च, B1 पाद्यार्घ्याचमनीयेन —d) D3 भगवा (sic) (for भगवद्) D11 भगवद्दर्शनेन च (sic)

17 a) Ś1 D4 सर्वदा Ś1 D5 11 °थाहो, Ñ2 V B D1 3 7 10 [ए]व महातेज (V2–4 B4 °जा), D6 हि°, D13 °…, D11 °बुद्ध, G2 M1 सु°, M4 [अ]ह महाभाग (for च महाप्राज्ञ) —b) Ś1 Ñ2 V B D1 3 5 7 10 13 [अ]भिपू°

